# मधुयानम्

उपन्यासः

विद्वन्मणिः

डॉ० केशवचन्द्रदाशः

लोक-भाषा-प्रचार-समितिः, पुरी

# मधुयानम्

उपन्यासः

विद्वन्मणिः
डॉ० केशवचन्द्रदाशः

लोक-भाषा-प्रचार-समितिः, पुरी

# मधुयानम्
( उपन्यासः )

प्रणेता
डॉ० केशवचन्द्रदाशः

प्राध्यापकः
श्री जगन्नाथ-संस्कृत-विश्वविद्यालयः
श्री विहारः, पुरी–७५२००२

प्रकाशिका
लोक-भाषा-प्रचार-समितिः
बड़ ओड़िआ मठः
पुरी–७५२००१
प्रथम-मुद्रणम्–१९९०

मूल्यम् रु०

श्री नारायण प्रेस
बालिसाहि, पुरी

भारत-शासन–मानव-संसाधन-विकास-मन्त्रालयस्य
अर्थ-साहाय्येन प्रकाशितम् ।

"मधुमन् मे परायणम्
मधुमन् मे पुनरायणम्"

# निजस्वम्

इतिहासस्य प्रवृत्तिरत्र पृष्ठभूमिः। घटना स्वैरिणी। विषयः काल्पनिकः। नामानि आवेग-प्रसूतानि। कालधर्मो धारा। संस्कारशोभनश्च विनिमयः। महायानम्....हीनयानम्...इतिवत् मधुयानमत्र तृप्तिक्षेत्रम्। प्रेमास्पदः कश्चन उपसंहारः प्रियपक्षः। तादात्म्यमिह साहस्थ्यम्। मानविकमूल्यबोधः प्रधानबिन्दुः। आत्मनिरीक्षणद्वारा क्रमशो मानवस्य उत्तरणं भवति' इति निर्यासः।

शतकेऽस्मिन् चतुरशीति-पञ्चाशीतितमे वर्षे "सुधर्मा"—पत्रिकायां धारारूपेण प्रथमप्रकाशमतनोत् अयमुपन्यासः। अतः सुधर्मा संपादको वरदराजायङ्गार्यो मे चिरनमस्यः। संप्रति पुस्तकाकृतिं रचयति लोक भाषा प्रचार समितिः। अतो हर्ष-प्रकर्षे मे न केवलः समितेः महासचिवः डॉ० सदानन्ददीक्षितः, अपितु सर्वे समितिसदस्या वरिवस्याः।

अन्ततः अभिनिवेशे मूर्त्तिमती प्रेरणा मम पत्नी श्रीमती सुभद्रा। साऽपि मे कार्त्तज्ञ्यपरिसरे एका ललिता लता....।

विनीतः

केशवचन्द्रः

# मधुयानम्

## १

उपचैत्री रजनी। चन्द्रो दृश्यते कामायनमिव। संगमिष्णुजलदः परितः खेलति। दिवायिता रजनी मन्थरा। विजनताधौतो विहारः। महज्ञः धम्मपुत्तः अङ्गनस्य एकस्मिन् शिलास्तरे आसीनः। कौषेयवसने स्थविरा ज्योत्स्ना स्तब्धा। सद्योलण्डितमस्तके छायापथीयप्रतिफलनं सुष्पष्टम्। प्रत्यङ्गानि तस्य प्रतिक्रियाहीनानि। आन्दोलितमना अद्य धम्मपुत्तः। विषादः हृदयं कवलीकरोति। तथापि अवयवाः निरुष्णाः। मुखे च विकृतिः न लक्ष्यते। अनुतप्त-नयन-जलं जानूपरि निपतति। गभीरात्मनिवेशे सः केवलमाविष्करोति—नीलाञ्जनायाः (गलत्) रौप्यनुपूराणि कति—

"एकस्य नयनस्य अश्रु अपरनयनमपि संक्रमते, किंतु एकस्य देहस्य व्यथा अपरस्मिन् नानुभूयते"—व्यथित आसीत् धम्मपुत्तः। तस्य तिर्यग्-दृष्टिः संलग्ना वर्तते पुष्पगिरेः धवलस्तूपे। तिमिरितः अधः प्रदेशः। शान्ताः पादपाः। प्रच्छन्नाः लघुनिलयाः। स्थिरपल्वले कुमुदिनी प्रफुल्ला। नक्षत्राणां प्रतिबिम्बं निश्चलम्। पल्वलं गगनायते।

सनातनजिज्ञासासु उदिता अभूत् वैष्णवी स्मृतिः। अङ्कुरितमभूत् वृन्दावनीयमौद्धत्यम्। क्षीणमहसत् महज्ञः। शून्योऽभवत् हासः तस्य शिथिलदन्त-बन्धनीषु। निविष्टोऽभूत् सः निष्काम साधकीय-मुद्रावलये। अशान्तः चक्रवाकः सहसा चीत्कृतः........

मुकुलित-नेत्रे दृश्यकतिपयमभासत—तस्य केशाः पलिताः। अवयवाः शिथिलाः। मानसं विभ्रान्तम्। समग्रशरीरे ज्वलनम्। अपि च निजप्रभावः न कुत्राऽपि अनुभूयते। स्वयं केवलमद्य विहारबद्धः छागः—सः वृद्धः।

निजवार्धक्येन सह धर्मस्य वार्धक्यमपि अनुभवति धम्मपुत्तः। यस्मिन् स्तूपे, यस्मिन् च विहारे साधूनां, साधकानां, उपासकानां, श्रमणानां भिक्षूणां च चित्राणि निर्मीयन्ते स्म, अद्य तानि उपमृद्य तन्त्राचार्याणां, शाक्तानां शैवानां च योगाकृतयः पूज्यन्ते। यत्र अहिंसा एक एव धर्म आसीत्, तत्र मद्यं, मत्स्यः, महिला, मांसः, मैथुनं च धर्मः भवति। यत्र स एव महाप्राज्ञरूपेण उपदिशन् आसीत् "जरानिकटे, व्याधिनिकटे, मरण-निकटे च मनुष्यः जन्मतो वृद्धः। संसारः क्षणभङ्गुरः। रूपमहोत्सवः केवलं मदान्धता। यन्नयने सत्यं प्रतिभाति तत् सर्वं निमेषमात्रेण शून्यायते। अलक्ष्ये च महाकालः सर्वान् अनुसरति। संसारस्य पुरतः सर्वस्मिन् पङ्किलपल्वलम्। यत्र पतन् मनुष्यः न कदापि उत्थातुं शक्नोति..........

आकाशतल एव मनुष्यस्य आवासः। इदमपि न कदा सः बोद्धुमिच्छति। मनुष्यः अन्धः—अज्ञः—मोहग्रस्तः—संपत्तिसर्वस्वः। प्रभातस्य शिशुः श्व एव नवचम्पकमिव भूमिशायी भवति—भविष्यति च इति न चिन्तयति। यथा सागरस्य तरङ्गमाला उपकूले सहस्रवारं म्रियते तथा संसारे मनुष्यस्य स्थितिः। किंतु निर्वाणं सत् सनातनम्। यथा नील-पीतादिवर्णाः आकाशस्य विकारतां सूचयन्ति तथा संसारः,-निर्वाणस्य विकारमात्रम्—

मनुष्यशरीरे अस्थि वर्तते। अस्थि धवलमिति जानन्नपि जनः सकृत् तदवलोकयितुं नेच्छति। अस्थि इव निर्वाणमपि मनुष्यस्य कामनावासनादिषु प्रलीनं वर्तते। यथा रक्तमांस-स्नायु-प्रस्नायूनामुत्सारणे अस्थि उपलभ्यते। तच्च धवलमिति ज्ञायते। तथैव कामनादीनां नाशे निर्वाण-लाभो भवति। "तदेव रजताभमानन्दमयम्"—

अद्य किन्तु तस्य प्रभावो लुप्तः। न कोऽपि तस्मात् श्रोतुमागच्छति। वृद्धशुकस्य नीरववदनमादाय सः केवलं संचरति विहारस्य अलिन्दे। यदि कश्चित् वृद्धः आगत्य तं प्रणमति स तमाशीर्वदति। कुशलं परिपृच्छति। वृद्धो वदति—"तन्त्राचार्याः आगत्य बहून् उपकुर्वन्ति। फूत्कारमात्रेण

रोगान् निराकुर्वन्ति । असम्भवं संभावयन्ति । अपुत्रिकाय पुत्रं प्रयच्छन्ति । हृतभाग्याय भाग्यं ददति ।"

मनागहसत् धम्मपुत्तः—

वृद्धः अनुवर्तयति—"तन्त्राचार्याः वदन्ति—तन्त्रे ज्ञानस्य पूर्णविकाश-मार्गः । तन्त्रसाधना एव पूर्णसाधना । निम्नसत्तायाः केन्द्रबिन्दुतः ऊर्ध्व-सत्तायाः शीर्षबिन्दुपर्यन्तं मनुष्यस्य संपूर्णविस्तृतिः अनेन सम्यक् अव-धार्यते । मैथुने न तन्त्रमोक्षः । किन्तु मैथुनोत्तरचिन्मयसत्तायाः मैथुनी-करेण"—

दृष्टिं परावृत्य महज्ञः अपश्यत्—अनादृतः बौद्धविहारः । प्रशान्ता निशीथिनी । पिप्पलवृक्षः तपोरतः । पत्रेषु सान्द्रचपलता । कृत्रिमपल्लवे सिद्धनिरञ्जना उत्खेलति । पिप्पलमूले शेषप्रवृत्तिमादाय समासीनः निर्वाणमुखो गौतमः । कङ्कालसारं शरीरम् । तथापि निर्झरति मुखात् हासमिश्रिता वाणी—

"नायं शेषयुगः, महज्ञ ! संसारः परिवर्तनशीलः । मरणं च मनुष्यस्य अवधारितभाग्यम् । यावत् शरीरम्, तावत् जराव्याधिमरणम् । कष्टद्वारा इष्टप्राप्तिः भवति इति सत्यम् । तथापि शरीरं न सर्वस्वम् । न वा कष्टं जीवने एकमात्रं ध्येयम्"—

"महज्ञ ! प्रश्नः न सर्वदा उत्तरणीयः । अभियोगः न सर्वदा स्पृहणीयः । विवादः न सर्वदा मीमांसितुं शक्यः । अपि च पुरातनं न सर्वदा त्यजनीयम् । नवीनं न सर्वदा अभिनन्दनीयम्—

निर्वाणं—मुक्तिः—मुमुक्षा—मोक्षः एतत् सर्वं शाब्दिक-संन्यासः । सर्वं यथारुचि व्याख्यातुं शक्यते—स्वप्नसंकुल आसीत् महज्ञः ।

"निर्वाणं निर्वापनम् । समग्रशारीरकप्रवृत्तीनां निर्वापनम् । शरीरस्य नाशोत्तरस्थितिरेव निर्वाणावस्था । इयं पृथक्स्थितिरेव सर्वशेषस्थितिः—शेषयुगतः आरम्भयुगसंप्राप्तिः ।

—नग्ननाग्ने गौतमप्रतिमा तथापि भाषमाणा—

महज्ञ ! युष्माकं क्लिष्टशरीरं अनुदिनमेकमेकं विहारतलप्रदेशं गमिष्यति। सर्वे उपासकाः—श्रमणाः–भिक्षवः च क्षयिष्णुस्तूपे समाधिस्था भविष्यन्ति। युष्माकं संख्या क्रमशः ह्रासो भविष्यति। यूयं निर्वाणकामिनः। युष्माकं कामना न समाप्ता। अतः इदं निर्वाणमेव युष्माकं पश्चात् विशालशून्यवादं दीर्घीकरिष्यति। ततः स्तूपा विगलिष्यन्ति। चैत्या उन्मूला भविष्यन्ति। विहारा उत्खोदिता भविष्यन्ति—

चकित आसीत् महज्ञः—

महज्ञ ! पुनः वीणायां नवतन्त्री संयुक्ता भविष्यति। नवध्वनिश्च निर्गमिष्यति। नवीना प्रतिश्रुतिः, नवा कथापि वर्तते महज्ञ.....!"

महज्ञः अन्वभवत् सा एव कङ्कालसार-वृद्धप्रतिमा क्रमशः अपसरति। तस्याः स्वरश्च ह्रसते।

घृणाविजडितमुखमुन्नमयत् महज्ञः धम्मपुत्तः।

महज्ञः ज्ञानी। समस्तशास्त्र-विशारदः। अभिज्ञासम्पन्नः। जीवनं निरीक्षितवान् समीक्षितवान् अङ्गप्रत्यङ्गस्य प्रतिक्रियाम् विच्छिद्य विमृष्टवान् प्रवृत्तीनां पिच्छिलपथान्। अद्य अनुभवस्य चरमपर्याये स उपनीतः। "सम्बोधिरेव लोकजीवने निखिलशान्ति संपादयति" इति तस्य शेषसिद्धान्तः।

महज्ञः ब्राह्मणपुत्रः। वेदज्ञः। दर्शननिष्णातः। निजप्रदेशे तस्य प्रभावः अक्षुण्ण आसीत्। यागयज्ञादि-विषये सः प्रवीणः। एकदा एकस्मिन् महोत्सवे स भ्रमणरत आसीत्। सहसा अपश्यत् श्वेताम्बरसन्यासिनम्। स च धीरः प्रशान्तः भिक्षासु अपि उदासीनः। मन्द्रकण्ठेन याचते। अप्राप्तौ दुःखं नास्ति। उदासीनतया अन्यत्र चलति। देहः कृशः। दृष्टिः स्थिरा।

ब्राह्मणपुत्रः समज्ञः तमुपासरत्—

निरलसतया तमभिनन्दितवान् अर्हत् पुद्गलः।

सामान्यपरिचयनिमित्तं उभौ निकटवर्तिनौ अभूताम्—

"ब्राह्मणपुत्रः समज्ञोऽहं आचार्य !"

"अहं अर्हत् पुद्गलः"

समज्ञः विनयभावेन किंचित् ज्ञातुं उन्मुखो अभूत्

'पृच्छतु'—

'अनेन परिच्छदेन—अनया च वेशपरिपाट्या आनन्दं प्राप्नोति भवान् ?'

'समज्ञ ! भोगोन्मुखसंसारोऽद्य हिंस्रः । मनुष्यः परश्रीकातरः । प्रवृत्तिः शोषणप्रखरा' अतः.......

'युगे युगे एतद् वर्तते, भवतः अनया वेशपरिपाट्या किमेतद् मूलतः अपैष्यति ?'

'न यास्यतीति सत्यम् । किंतु उपशमिष्यति ।'

'उपशमनाय अपचेष्टा कथम् ? समयप्रवाहे सर्वमौन्नत्यम् अवनमति—'

'सत्यम् । किंतु एतदर्थं कति निमित्तानि आवश्यकानि ।'

'निमित्तानि ? किमियं वेशपरिपाटी ?'

'नहि, सम्यग् ज्ञानम्, सम्यक् चारित्र्यम्. सम्यग् दर्शनम् ।'

'एतदर्थं श्वेताम्बरधारणम् ? एतदर्थं देहक्लिष्टता ? एतदर्थमुपवासः ? एतदर्थं चिरभ्रमणम् ? एतदर्थमाजीवनं गिरिदरीनिषेवनम् ?'

'समज्ञ ! कर्मसमावृत्तो जीवः रत्नत्रयद्वारा कर्मणः शुद्धता परिष्कृतिश्च अपेक्ष्यते । अतः आस्रवः, बन्धः,संवरः, निर्जरः, मोक्षः, जीवः, आजीवः, इति सप्तानां पदार्थानां ज्ञानमाहरणीयम् । ततः जीवः केवलज्ञानद्वारा निर्वाणमधिगच्छति'

'ततः......'

'शृणोतु । इतः पूर्वं प्रारम्भिकाभ्यासरूपेण श्वेताम्बरधारणम्, अहिंसाव्रतपालनम्, सम्यक् अनुभवनिमित्तं देशाटनं कर्त्तव्यम् । ततः अध्ययनप्रवचनादिद्वारा सम्यग् ज्ञानमाहर्तव्यम् । ततः दिगम्बरवृत्तिमवलम्ब्य सम्यक् दर्शनं विधेयम् । ततः निर्वाणम्....

मनसः भावना न समाप्यते न वा मुखात् कथा समाप्यते—तस्मिन्नेव दिवसे समज्ञोपरि श्वेताम्बरीयः प्रभावः यथेष्ट आसीत्। जिज्ञासुः समज्ञः तद्दिनतः जैनः संपन्नः। सः अन्वभवत्—अस्य महत् उद्देश्यं लोकनिकटे परिवेषणीयम्। लोका अहिंस्रा भवन्तु। सर्वत्र शान्तिः विराजताम्। धार्मिककलहः परिसमाप्तो भवतु। नवचेतना दीपयतु संसारम्। स्वास्त्ययनी भवतु मानवमण्डली। अतीते दिवसाः सम्मिलिताः।

युवकः समज्ञः समभवत् अर्धवृद्धः अर्हत्—सांप्रतिमः सर्वत्र एकमेव नाम जैनमुख्यः "सांप्रतिमः"। सर्वत्र उच्छवसितसंवर्धना। जनाकीर्णस्थले विभिन्नगिरिगुहासु वसतिः! सहस्र-सहानुचराः। अर्हत् पुद्गलस्य नामोपरि अर्हत् सांप्रतिमस्य प्रशंसा। अर्हत् सांप्रतिमः समग्रजैनाश्रममुख्यः। आश्रमणां समस्तपरिचालना तस्मिन् न्यस्ता। तस्य आदेशः धर्मस्य आदेशः। तस्य निर्देशः धर्मस्य अनुशासनम्। तस्य संकेतः शास्त्रस्य अनुवचनम्। तस्या इच्छा आदिजैनस्य पूताभिलाषः।

किंतु गगनं न सदा स्वच्छम्। चन्द्रः न सदा उद्दीप्तो वर्तते। पूतोऽपि शंखः न सदा पूज्यते। कालक्रमेण सांप्रतिमस्य अनुशासनं कठिनम् अभूत्। श्वेताम्बरदिगम्बरयोः विवादः समजनि। दिगम्बरः धर्मद्रोही संजातः। श्वेताम्बरः संकीर्णमना अभूत्। विप्लवी च अभवत्। श्वेताम्बरी उत्कूला अभूत्। श्वेताम्बरः नीतिहीनः संजातः। श्रमणाः विशृंखलिता अभूवन्। निकुञ्जमभूत् जैनाश्रमः। यत्र कुत्राऽपि श्वेताम्बराः श्वेताम्बर्यश्च मिथुनिताः। कति धर्मान्तरमङ्गीकृतवन्तः। कति बौद्धविहारे वसतिं विधाय बौद्धाः संजाताः।

बौद्धधर्मस्य महिमा सर्वत्र प्रथितः। आनन्दः संघपरिचालकरूपेण सर्वान् वशीकृतवान्। सारीपुत्तः अप्रतिद्वन्द्वी श्रमणः संजातः। सोऽपि आनन्द इव धर्मं लोकनिकटमानीतवान्। सर्वत्र संघः संस्थापितः। बुद्धस्य वचनं सर्वदा शंखयितम्। ततः वृद्धः आनन्दः निर्वाणं प्राप्तवान्। शील-समाधि-प्रज्ञादिषु आनन्दस्य चरमसफलता लोकान् चमत्कृतवती। बुद्धमूर्तिनिकटे आनन्दस्य प्रतिमा पूजिता। आनन्दसारीपुत्तयोः उदारशीलता, प्रशस्तमन-

स्कता, नवीकृता दृष्टिभङ्गी, बौद्धधर्मं जनप्रियमकरोत् । सारीपुत्तः निर्वाणमधिगतवान् । अन्ये बहवः श्रमणाः निर्वाणमुखिनः संजाताः ।

एकदिने उद्व्यग्र आसीत् अर्हत् सांप्रतिमः । इयमेव अप्रीतिकरघटना तस्य मनसि गंभीरा आसीत् । स इतस्ततः भ्रमन् मार्गान्तरमन्विष्यन् आसीत् । कश्चित् बौद्धः श्रमणः तन्निकटमागत्य विज्ञापितवान्—"सिद्धभिक्षुः योगदेवः भवन्तमामन्त्रयति । अनुगृह्णातु भवान् ।" आमन्त्रणं श्रद्धया श्रुतवान् सांप्रतिमः—

"सिद्धभिक्षुः योगदेवः मरणासन्नः । संघस्य उत्तरदायित्वरक्षणाय न कोऽपि तथा समर्थो वर्तते । श्रमणाः कलहायन्ते । भवान् संघचालको भवितुं समर्थः इति योगदेवः निश्चिनुते । अतः कृपया संघमद्य आगन्तव्यम्' विचलितः सांप्रतिमः तत्क्षणादेव आमन्त्रणमङ्गीकृतवान् । अप्रत्याशितमिदं बहुमन्यते स्म ।

योगदेवमुपगतवान् सांप्रतिमः । निर्वाणमुखी योगदेवः तस्य आग्रहमभिनन्दितवान् । मरण-शय्यायामपि स्नेहातिशयेन तं दीक्षितवान् । धीरस्वरेण सांप्रतिमः आवर्तयत्—"ॐ मनोपुब्बाङ्गमा धम्मा मनो सेठ्ठा मनोमया .......

ततः योगदेवः तं महज्ञः धम्मपुत्तः इति नाम्ना अभिहितवान् । तद्दिनमेव सर्वत्र संघे वार्ता प्रसारिता । महोत्सवः समायोजितः । तस्मिन् महोत्सवे सिद्धयोगदेवः उदघोषयत्—"अद्य प्रभृति महज्ञः धम्मपुत्तः संघानां परिचालकः"—ततः बुद्धं शरणं गच्छामि । संघं शरणं गच्छामि । धम्मं शरणं गच्छामि । इत्यादि ध्वनिषु महोत्सवः उद्यापितः ।

अप्रत्याशितं जनं संघपरिचालकरूपेण दृष्ट्वा आशायिनः श्रमणाः क्षुब्धा अभूवन् । किंतु धम्मपुत्तस्य व्यक्तिमत्तानिकटे तेषामभियोगः निष्फल आसीत् ।

बहुनिर्यातनासु, बहुवादविसंवादेषु, बहुद्वन्द्वप्रतिद्वन्द्वेषु अवगाह्य अन्ततः सिद्धशासकरूपेण ख्यातिं प्राप्तवान् महज्ञः धम्मपुत्तः । सर्वे आयत्तीकृताः—

धम्मपुत्तस्य नेत्रद्वयं मनाग् उत्फुल्लम् । ज्योत्स्नासिक्तलण्डित-मस्तके कतिबिन्दवः शिशिरकणाः स्थिराः । दीर्घायतं तस्य निःसारशरीरं प्रेताकृतिमनुकरोति । अग्रे स एव भग्नस्तूपः । स एव क्षयिष्णुविहारः । स एव संवृद्धः लण्डित-पिप्पलपादपः । तदेव आविलपल्लवम् ।

सहसा अशान्तः चक्रवाकः उच्चैः विलपितुं प्रारब्धः ! धम्मपुत्तः व्यग्रः सन् शिलातू उत्थितः । अपश्यत्—आकाशः स्वच्छः । पवनः पूर्ववत् धीरः । किन्तु पवनतरङ्गे प्रवहति नीलाञ्जनायाः रौप्यनूपुरनिक्वणम् ।

कर्णद्वयमरुणत् तदेव निक्वणम्—

भासमानमभूत् नीलाञ्जनायाः कङ्कालशेषशरीरम् । शेषपर्यन्तं निर्बोध-पशुरिव सा अहिंसधर्मस्य हिंसावलिरभूत् । हृदयं विदलितमभूत् धम्मपुत्तस्य । नयनस्य अबाध्यलोतकं बहिरागन्तुमुपक्रान्तमासीत्—

शान्तव्यथितो धम्मपुत्तः एकाग्रमनसा पश्यन् आसीत् विहारबहिस्थ-पिप्पलचूडाम् ।

# २

शीलप्रज्ञ........!

प्रतिप्रभातम् एका एका सन्ध्या वर्तते। अहमद्य अनुभवामि—मध्याह्नेऽपि छाया नावलुप्यते। छायायाः पृथक्सत्तां ममास्मिन् देहे आविष्करोमि। अहमङ्गीकरोमि, शीलप्रज्ञ........! मुक्तः त्वम्........

........शीलप्रज्ञ........! त्वया सर्वं परित्यक्तम्। सन्यासी अपि गृहं निर्मितवान्। तदेव गृहमत्र अनेकगृहस्थानां पूजास्थानम्। मन्दिराद् अतिपवित्रम्। विहारात् अधिकशान्तिप्रदम्। गिरिगुहातः अधिक-मनोरमणीयम्।

........सम्यक् अधिगतं मया, शीलप्रज्ञ....!—क्षुद्रपतत्त्रिणः लघुनीडं महत्। तस्य लघुचञ्चूः, तस्य अशक्तचरणं, तस्य लघुमनः शतबृहद्जीवतः अधिकशक्तियुवम्। तस्य निर्मितियोजना सर्वतो बलीयसी....

........शीलप्रज्ञ! अहमनुतप्तः। कतिनिमेषानां कृते स्वयं निशेषितः। अद्य निर्वाणीभूतवर्णान् कति विहाय नाग्रे मे किमपि वर्तते। पश्चात् केवलं युवयोः छाया...मम इच्छा आसीत्...नहि, तदद्य कर्तुं न शक्यते मया। अहमनुतप्तः, शीलप्रज्ञ! अहमनुतप्तः....

........अन्वेषणाय वयो मे नास्ति। अहं प्रौढः—कायेन-मनसा-वाचा। केवलं मत्समक्षे अवशिष्टाः कति वासराः प्रयास्यन्ति। किं वा कृतं मया? नूनमेव कतिशास्त्रीयमरोचिकासु जलं पीतम्। किंतु तद्दिनस्य सूर्यास्तं, अद्य च सूर्यास्तं—अनयोः मध्ये न किमपि पार्थक्यमवलोकितम्। तथापि अनुभवामि—न कोऽपि कस्यापि परिपूरकः।

........शीलप्रज्ञ! त्वं जीवनाय शस्त्रमुत्तोलितवान्। परमहं मरणेन सन्धिरतः। त्वं जीवितो वा न वा इति न जानामि। परमहं जीवितः। अहमद्य अनुपश्यामि—वृद्धो वायसः केवलं बकस्य नीड़ं विभिनत्ति।

........विस्मृतेः यत् किमपि मत्समीपे अद्य वर्त्तते तन्निर्णीय अनुभवामि—सर्वा उपलब्धिः न सत्यसम्बला। आत्ममन्थने केवलं मिलति कति-मुहूर्तानां बुभुक्षा··· कतिस्वप्नानां परिक्रमा—कति निर्वासितप्रवृत्तीनां विद्रोहः कति व्यग्रतायाः अवसन्नस्वरः····

·······शीलप्रज्ञ ! त्वं मुक्तः। अहं प्रतीक्षाव्यथितः। मरणस्य पूर्वमूहूर्तं सदा यन्त्रणामयमिति केवलमनुपश्यामि। अहं चिन्तयामि अयं मम शेषजन्मबिन्दुः। आवरणात् चिरमुक्तिर्मम नूनं भविता। तथापि मे विश्वासः मयि नायाति। यतः कार्यकारणमत्र नागबन्धनम्। नागबन्धनस्य आवर्त्तनं न कदा समाप्तिं गच्छति। अतः सदा चिन्तितः·······

·······निर्वाणं मे शास्त्रीयलक्ष्यम्। किन्तु आत्मा शान्तिमभिलषति। प्रशान्ति-रेव अद्य मदर्थं निर्वाणम्। अहं प्रशान्तिमेव इच्छामि।

·······मम एकैव कामना वर्त्तते। तव दर्शनेन सा समाप्ता भविष्यति। अहं शान्तिमाप्स्यामि। शान्तिसत्तासु नश्वरता मे नंक्ष्यति। अहं तल्लीनो भविष्यामि। अतः त्वामावाहयामि। त्वमागच्छ। किन्तु न जैनरूपेण, न बौद्धरूपेण, न वा राधाकृष्णीय-युगलछन्दसा, न वा प्रकाण्ड-शैव-वैष्णव-शाक्त-तपस्विरूपेण, न वा वेदज्ञब्राह्मणरूपेण। त्वमेहि—विश्वमानवस्य एकमूर्तिरूपेण यस्मिन् जीवन-जीविका-जिज्ञासानां भारसाम्यं संरक्षितं वर्त्तते।

....शीलप्रज्ञ ! देहः धर्मसाधनस्य अविच्छेद्यः अवयवः। अतः सहसा त्यक्तुं न शक्यते। परमेकदा अवश्यं त्यजनीयो भविष्यति। अभिज्ञार्थम् ···जिज्ञासार्थम्....

···यतो हि जिज्ञासा निरवच्छिन्ना......

प्रत्यावर्तते श्रेष्ठी शीलप्रज्ञः। बहुदिनानन्तरं बन्धुमुखदर्शनं भविष्यति। मनसि महान् आनन्दः निजपरिच्छदे दृश्यते सः यथा यौवनस्य मूर्तिमान् अवतारः। दुकूलोत्तरीयं स्कन्धे शोभते। हस्ते धनाधारः। पादे अलंकार-खचिता पादुका। मस्तके विजयटीका—

शकटे उपविष्टः। निर्दिशति—अयं मार्गः........अयं मार्ग इति शकटिनम्। पल्लीतः पल्लीं प्रविशति शकटः। धनपूरितः शकटः। यथारीति च सुसज्जितः। कामोपमः दृश्यते शीलप्रज्ञः शकटोपरि। मार्गपार्श्वे बहवः तमवलोक्य आनन्दन्ति। अभिवदन्ति च। परिचित-पल्लीजनाः तमाशीर्वदन्ति अपि।

आसन्नमपराह्णम्—

पल्लीतः निर्गतः शकटः। परितः व्यायतकान्तारम्। निविड़कृत्रिम-वनम्। शकटः शनैश्चलति। प्रमोदी शीलप्रज्ञः। मनसि परिजनदर्शन-तृषा अभितरति।

सहसा शकटी अवदत्—"श्रेष्ठिन्! इतः पल्लीं प्रत्यागमिष्यामः। अग्रे धूलिवातः अस्मान् अभिधावति।"

"मा भैषीः। तदपसरिष्यति। अस्माकं न काऽपि क्षतिः भविष्यति।" तं सः निर्भयीकृतवान्।

अनिच्छुक आसीत् शकटी पुरोगन्तुम्। बलीवर्दाः शिथिलाः संजाताः। तान् प्रहर्तुं इच्छन्नपि न पारयति। शनैः पुरःसरति शकटः।

तत् क्षणादेव झञ्झा उपान्तवनं ग्रसितुं प्रारब्धा। बलीवर्दाः कंपिताः। तेषां हम्मनं च निरभिभूतमासीत्। धूलिवातः क्रमशः अपराह्णमन्धी-कृतवान्। वृष्टिः प्रबला अभूत्। शकटः विपरिणतः। शकटी च दूरे

निक्षिप्तोऽभूत् । धावन्तो बलीवर्दाः शकटात् निर्मुक्ताः । विपरिणतः शकटः पतङ्गः संजातः । पादपाः उन्मूला अभवन् । शाखाः विच्छिन्नाः । धूलिस्र-वने सर्वत्र घर्घरशब्दः । सर्वत्र परिहृतेः सूचना । ततः घनान्धकारः प्रबली-भूतः । कः कुत्र गतः, न कोऽपि ज्ञातवान् । रात्रिः घनघर्घरा—

तमसा प्रलयङ्करी । वातः किन्तु शान्तः । वृष्टिस्तथापि तीव्रा । शीलप्रज्ञः एकस्मिन् प्रदेशे निपतितः । तस्य जघनमावृत्य जानूपरि पतिता वर्तते सहकारस्य बृहत्शाखा । सः अतिव्यथते । कमपि आह्वानाय वाक्‌शक्तिः नास्ति । क्षुधा पीडाप्रजननी । यन्त्रणा जीवनग्रासिनी । दृष्टिः तिमिराच्छन्ना । केवलं भारपीडया स जानाति, एका बृहत्-शाखा तस्य आजघनचरणमुत्पाटयितुं यतते ।

स पश्यति निमेषमध्ये पादद्वयं छिन्नं भविष्यति । शरीरं पक्ष्यति । कृमिकीटादीन् वारयितुं हस्तः असमर्थो भविष्यति । देहस्य सर्वमपि रुधिरं वृष्टिस्रोतसि मिलिष्यति । अतिप्रत्यूषे एव काकः पश्यन्नयनद्वयं भक्षयिष्यति । ततो दृष्टेः समाप्तिः । लोतकस्य समाप्तिः । जलीभूतरुधिरस्यापि अन्तिमता····।

परिवेषतः आकुलप्रार्थना वेदनाविधुरिता अभूत् । विश्वात्मनि प्रगाढविनतिः व्यर्था संजाता । न किमपि साहाय्यं, न वा आश्रयं प्राप्तवान् सः । केवलं निर्गमिष्णुमानसतः एकमुत्तरं लब्धवान्—'संसारस्य नियमः सर्वान् लालयति....पालयत्यपि....। किन्तु न कमपि निजीकरोति ।'

पीड़ा-क्लिन्ना रजनी प्रत्यूषिता ।

प्रव्रज्या वसतितः प्रत्यावर्त्तते आचार्यः सांप्रतिमः । सूर्यः उदयोन्मुखः । तापः प्रखरो भवेदिति आशङ्कया त्वरते सांप्रतिमः । गमनमार्गे श्रूयते कर्दमभेदनशब्दः । श्वेताम्बरे तस्य कर्दमस्य अलक्ष्यचिह्नानि । लघुजला-शयो जलपूर्णः । मार्गस्थनतप्रदेशा अपि पल्वलायन्ते । सहसा अपश्यत् सांप्रतिमः—अनतिदूरे सुवेशो मानवो भूमिशायी । कियद्दूरं शकटो विपरिणतः । मानवस्य जघनोपरि सहकारशाखा यमायते । संज्ञाहीनो वा मृतो वा इति द्विधाग्रस्तः सांप्रतिमः समीपमागतः ।

उपवार्धक्येऽपि तस्य बलमक्षुण्णमासीत्। सः बलीयान् अद्यापि। बहुचेष्टया कौशलेन च शाखामपसरितवान्। हतचेताः युवक जीवित इति तस्य शरीरं संस्पृश्य सांप्रतिमः अजानात्। सत्वरं स्कन्धे तं निधाय निकटपल्लीं निरगमत्।

परिचितशिष्यगृहे तं संस्थापितवान्। अनेकानेक-शुश्रूषया चैतन्यं प्राप्तवान् युवकः।

शिष्यः जनैकः जैनब्राह्मणः। वृद्धः। एकमात्रसहायिनी भार्या। एकैव कन्या अतिलालिता नीलाञ्जना। गृहाङ्गणं क्षुद्रतरम्। गृहमपि लघु। परितः नानाफलवनम्। कृषिभूमिश्च अङ्गनं संलग्ना। गृहस्य पश्चात् गोशाला। गावः सन्ति। ताश्च नीलांजनायाः अतिप्रियाः। दुग्धघृतादीनां व्यवसायेन कृषिकर्मणा च लघुपरिवारः सुखेन निवसति।

दिनद्वयानन्तरं आचार्यः सांप्रतिमः आश्रयं प्रत्यागन्तुं उपाक्रामत्। ब्राह्मणं बहुवचसा विबोध्य कानिचन द्रव्याणि काश्चन मुद्राश्च प्रदाय "मासात् परं पुनः पश्यामि" इति प्रतिश्रुत्य प्रस्थितवान्। युवकस्य सेवार्थमपि उपदिष्टवान्। ब्राह्मणः कृतकृत्योऽभूत्। निजपत्नीं कन्यां च तथाकर्तुं उपादिशत्। सः स्वयमपि शीलप्रज्ञस्य स्वस्थये प्रगाढमयतत।

नीलाञ्जना आसन्नप्राप्तवयस्का—

नयनसमक्षे तस्याः असंख्यकामनायाः लिपिः। अवयवे संचरति सुगौर-पूर्वाह्लम्। सर्वाङ्गे नवशक्तिस्पर्शः। युवश्रेष्ठिनमवलोक्य तस्याः मनसि अननुभूतस्नेहः समजनि। सा च नितरां तस्य सेवार्थं स्वयं उपयुक्ता अभूत्।

युवश्रेष्ठिनः आस्वस्थता तस्याः हृदये प्रथमवारमेव अपूर्वामनुभूतिम-जनयत्। कृतज्ञतासु कति अश्रुबिन्दुन् अपिबत्। युवश्रेष्ठी अपूर्वशुश्रूषासु व्याधिमपि विस्मृतवान्। किंतु चलप्रचलार्थं चरणे शक्तिर्नागता। आधार-रूपेण नीलाञ्जना सदा सहायिनी।

नीलाञ्जना निपुणा—गृहकर्मणि, सेवायां; अध्ययनेऽपि च। बाल्यतः सर्वमाहृतं मातृतः। अधुना सा दुहिताऽपि मातुःमाता। सदा उदासीना।

मनसि चपलता तथा न लक्ष्यते। अतीव चिन्ताशीला। शीलप्रज्ञस्य निकटे उपविश्य कदा कदाऽपि अन्यमनस्का भवति। एका दुःखरेखा मुखे तस्याः स्पष्टा भवति। शीलप्रज्ञः तन्निरीक्ष्य तां पृच्छति—"किं चिन्तयसि?" सहसा कल्पनातः निवर्त्य नीलाञ्जना हसति। हसितं तस्याः अतिमधुरम्। आकण्ठमुपभुङ्क्ते शीलप्रज्ञः। ततः सा कर्मछलनया उत्थाय प्रतिष्ठते। यदा शीलप्रज्ञः उन्मनस्कतया उत्थातुं यतते, चरणे पीडामनुभूय व्यथते। तदा नीलाञ्जना प्रत्यावर्तते। तस्य हस्तमाधरति। सामान्यस्मितमुखेन पुनः प्रतिष्ठते।

नीलाञ्जना भगवन्तं प्रार्थयति। तस्य स्वस्थतानिमित्तं अश्रु तर्पति। महावीरस्य मूर्तिनिकटे बहु मनस्यति। तस्य समस्तसौन्दर्यं याचते। एतदर्थमपि बहुवारमभिवदति। दीपं ज्वलयति। धूपमर्पयति। दुग्धेन मूर्तिमवगाहयति। नैवेद्यं भक्तिपूतमनसा प्रददाति। अञ्चलं ग्रीवायां सर्पीकृत्य पुष्पाणि समर्पयति। नमस्कृत्य जानूपरि पुनः उपविशति। अञ्जलिं विदधाति। मनसि स्तुतिं गुञ्जति। ततः मुक्तहस्तेन भिक्षते—"भगवन्! तस्य स्वस्थतां कामये। यदि सः पूर्णस्वस्थो भविष्यति र्हि भवतः दीक्षां ग्रहीष्यति। सः जैनो भविष्यति। भवतः नाम प्रसारयिष्यति। भवतः महत्त्वं वर्धिष्यते। तस्य पापमवक्षयतु भवान्। व्याधितः तं मोचयतु" नयनं निमील्य सा तत्र उपविशति। पुनश्च महावीरप्रतिमां पश्यति। महावीरः जैनः दृश्यते शान्तः, उदासः, अविनाशवादस्य अनवक्षयः अवतारः, चिरनग्नः। मुखे स्मितम्। निर्विकारा नयनस्य दृष्टिः। अवसरेऽस्मिन् कुसुमानि विगलन्ति मूर्तितः। तस्याः आत्मविश्वासो वर्धते। धूपस्य भस्म शीतलं भवति। अनामिकाङ्गुलीद्वारा बिन्दुमेकमानयति। मस्तके च निदधाति। अन्तरावासमागच्छति। मात्रा सह आलपति। गृहकर्मणि च निमज्जति। इदमासीत् तस्या नित्यकर्म।

शीलप्रज्ञः आहतकपोत इव उत्थातुं यतते। परं सर्वं व्यर्थं भवति। कर्मव्यापृताऽपि नीलाञ्जना यदा अस्य एतादृशं प्रयत्नं पश्यति तदा

तमाधावति । बोधयति—"एकत्र उपविश । व्यस्तो मा भव । स्वस्थतामपेक्षस्व ।"

"त्वं कथं व्यथसे ?" अहं प्रयते । यत्नं विना न किमपि सिध्यति । त्वं तु त्वत् कर्म व्यपृता । अहं च मम कर्मणि ।"

हसति शीलप्रज्ञः । व्यथातुरा नीलाञ्जना ईषद्विहस्य वदति—निकटतमः निकटतमस्य कृते व्यथते एव"—

वृष्टितः पूर्वं शीतलवातः वहत्येव—

बहिस्थसूर्यः अन्तःप्रवेष्टुमभिलषति । रक्तिमधूलयोऽपि मार्गतः उत्थातुमुपक्रमन्ते ।

कियद्दिनेषु नीलाञ्जना शीलप्रज्ञश्च परस्परं प्रणयतः । निमेषमपि विच्छेत्तुं नेच्छतः । यदा शीलप्रज्ञः एकाकी उपविशति तदा केवलं नीलाञ्जनायाः नुपूरशब्दान् मनसि अनुरणयति । बाल्यतः नुपूरमिदं नीलाञ्जनाया पादे वर्तते । नुपूरस्य अदूरप्रसारी ध्वनिः आनन्दयति परिवारम् । तदेव अनूरणनं एकमेव ध्येयं शीलप्रज्ञस्य । नीलाञ्जना किं करोति ? कुत्र वा वर्तते । कुत आगता ? कुत्र वा गच्छति ? इति सर्वमपि वक्तुं शक्नोति शीलप्रज्ञः । नीलाञ्जनाऽपि चतुरी । साऽपि तस्य सर्वामपि गतिं रीतिं च लक्षयति । इत्थं स्नेहातिशयेन शीलप्रज्ञः परिवारभुक्तोऽभवत् । ब्राह्मणः तं पुत्रत्वेन स्निह्यति । ब्राह्मणी अपि तथा । नीलाञ्जनायाः अनुरागः क्रमशः तीव्रतरोऽभूत् । कदा कदा यदि शीलप्रज्ञः कौतुकेन पृच्छति—"अञ्जने ! मयि व्यथा । अथ च त्वं व्यथसे ?" नीलाञ्जना विषयेऽस्मिन् आत्मानं अनुशीलयति । किंतु न किमपि उत्तरं प्राप्नोति ।

—कुमुदिनी विकासोन्मुखिनी—

अद्य नीलाञ्जना निषिद्धा । शीलप्रज्ञस्य समीपं न आगमिष्यति । माता दृढतया प्रतिषिद्धवती । सा अस्पृश्या । जनमुखमपि न द्रक्ष्यति । एकस्मिन् प्रकोष्ठे उपवेक्ष्यति । महावीरमेव चिन्तयिष्यति । ऋतुस्नानदिवसोऽयम् । एकस्मिन् पात्रे आहारः । एकस्मिन् शयनीये शयनम् । एकस्य जनस्य

मुखदर्शनम्। या मातृकल्पा अथवा माता सा एव दिवससप्तकेऽस्मिन् अन्नं वसनं च प्रदास्यति। तस्याः एव मुखदर्शनम्। तया सह केवलमालापः। अतिप्रत्यूषे स्नानं यथा पक्षी अपि न पश्येत्।

पीड़ितशीलप्रज्ञः सर्वं पश्यति। किन्तु निरुपायः। नीरवतया व्यथते। नीलाञ्जनाऽपि दुःखिता। निःसङ्गप्रकोष्ठे मनः न समेति। बहिर्गन्तुं मातरं निवेदयति। माता तु समयेऽस्मिन् अतिनिष्ठुरा। तां वारयति। सर्वामपि सामाजिक व्यवस्थां वोधयति। किन्तु तस्याः मनः न किमपि बुध्यति। सरलनयनतः केवलमश्रु निर्गलति। इत्थं सामयिक-लोतकप्रवाहः, रक्तस्रोतश्च स्त्रियमुर्वरपृथिवीरूपं प्रयच्छति। कति उष्णबिन्दवः देहे आलुडयन्ते। तप्ततरङ्गाः च सृज्यन्ते। ततः मनस्विनी तेजस्विनी भवति। सरलः यौगिको भवति। यौगिकः जटिलो भवति। ततः महातीर्थे स्नानं समाप्यते........।

४

व्यतीताः कति मासाः—

आचार्यः सांप्रतिमः प्रव्रज्यातः प्रत्यागतः। सर्वत्र आश्रमस्य समुचितमनुशासनम् अवलोक्य संतुष्टः अभूत्। कति नूतनाश्रमा उद्घाटिताः। धर्मः बहुत्र प्रसारितः। ग्रामे ग्रामे संचरन्ति श्वेताम्बराः। बहुत्र आचार्यसांप्रतिमस्य स्तुतिः। पुनः पुनः प्रशंसा गौरवगानं च श्रूयते। विभिन्नप्रान्ते आश्रमं परिदृश्य, सन्यासिनं च उपदिश्य, अनुशासनं कठोरीकृत्य प्रत्यागतः आचार्यः।

अद्य तस्य विभिन्नपल्लीषु प्रव्रज्या।नीलाञ्जनायाः ग्रामः तस्य प्रथमो लक्ष्यः। तत्र स द्रक्ष्यति—परित्यक्तरुग्णयुवकस्य कीदृशो स्थितिः अधुना। मनः चञ्चलम्। पादः पुरःसर्तुमुद्यतः।

स्तोकमास्वस्थः शीलप्रज्ञः। चरणतः व्यथा क्रमेण अपसरति। समस्तयन्त्रणां स विस्मरति नीलाञ्जनायाः स्नेहसेवासु। उभयतः उभौ न कदा अपसरतः! सदा सः नीलाञ्जनामेव अनुभवति। तस्य मनसि नीलाञ्जना। हृदये नीलाञ्जना। वचनेऽपि नीलान्जना। आस्वस्थमपि शरीरमपेक्षते तस्या एव स्पर्शम्।

अद्य उभौ उपविष्टौ गृहाङ्गणे

मधुरालापैः निमेषाः आर्द्रीभवन्ति। उभयस्य नयने मौलिकस्वनिमा मिथुनीभवति। भावना अव्यक्तापि व्यक्ता। छलना मधुरायते। किंतु सहसा संप्राप्तः तत्र सांप्रतिमः। तं दृष्ट्वा शीलप्रज्ञपार्श्वतः उत्थिता नीलान्जना। सांप्रतिमस्य चरणमावन्द्य सहर्षमभिनन्द्य च गृहं प्रावेशयत्। शीलप्रज्ञः आसीन आसीत् सोऽपि तादृशावस्थायामाचार्यमभ्यनन्दत्।

सांप्रतिम आसीनोऽभूत् लघुनिलयस्य अलिन्दे। दृष्टिस्तु निविष्टा आसीत् कपोतमिथुनोपरि। धीरगम्भीरो लक्ष्यते सांप्रतिमः। सः सकृत् शीलप्रज्ञ-

मवलोकितवान्। सक्तत् च नीलाञ्जनाम्। ततः कपोतद्वयस्य एकीकृत-चञ्चूद्वयं संलक्ष्य भावनारत आसीत् सांप्रतिमः देहास्वादनात् परं तापः—संतापः—अनुरागः मादकता—नैमेपविस्मृतिः एतत् सर्वमेकेनैव प्रणालेन बहिर्गमिष्यति ततः पूर्णशिथिलता। ततः यन्त्रणायाः स्वरः स्पष्टीभविष्यति। विरक्तिः पुनर्नवीभविष्यति। पश्चात् कति अतीतस्य छायाः नयनं निमीलयिष्यन्ति। ततः धीरमरणस्य शुभ्रछाया आविर्भविष्यति।

"......मनुष्यः संसारे पुष्कले परित्यक्ष्यति—धनं यौवनं प्रीतिः—अन्वेषा—अनुसंधित्सा—शक्तिः सर्वम्। किंतु किं प्राप्स्यति? मुखे कति गभीररेखाः-- मस्तके कति श्वेतकेशाः—कति शून्यहासाः कति प्रौढानि अस्थीनि...... उद्वर्तनमेतावद्वस्तु यत् यतः आनयति तत्र नयति"......।

सांप्रतिमस्य कण्ठीयनीरवता सर्वान् नीरवीकुर्वाणा आसीत्। शीलप्रज्ञः भीमसौम्यसांप्रतिमं पश्यति। सांप्रतिमस्य पश्चात् कर्मरता नीलाञ्जना। तस्य पूजार्थमायोजयति। शीलप्रज्ञस्य दृष्टिस्तु सांप्रतिममुत्प्लुत्य नीलाञ्जनायां अभिनिविष्टा। दूरतारका इव दीप्यते सा। किन्तु निश्चेष्टः शीलप्रज्ञः काकुस्थः। मनसि तस्य अज्ञातद्वीपस्य गीतिगुञ्जारवः।

ध्यानस्यः परिवेशः। स्वप्नालु वातावरणम्। सांप्रतिमः चिन्तामग्नः। भावनासु उद्धूयन्ते वंशतालकुञ्जेषु अपसरन्तो ग्रामाः। कुमारित्वे गाहमानाः कति गिरिश्रृङ्गाः। कुज्झटिकासु पलायमाना अस्पष्टा कुमारी! इत्थं तस्य मनसः अवकाशः लुप्तः।

सविनयमाकारितवती नीलाञ्जना—"गुरुदेव! भोजनमुपासताम्"—चिन्तितः सांप्रतिमः शीलप्रज्ञमवलोक्य मनागहसत्। सोऽपि प्रतिहसितवान् सांप्रतिमः उत्थाय अन्तः प्रविष्टः। नीलाञ्जना शीलप्रज्ञमपि स्मितप्रपाते प्रसन्नीकृत्य गृहं प्रविष्टा।

भोजने उपविश्य आरब्धवान् साम्प्रतिमः—अञ्जने! तस्य आरोग्यं यदि कामयसे तर्हि अस्मद्धर्मे स दीक्षितो भवतु। पूर्णारोग्यो भविष्यति।

"हँ, गुरुदेव ! तदेव मे मनसि वर्तते।"

"तं वद। कियत्कालात् परं स मम आश्रममागच्छतु।" "तदेव वदिष्यामि। यदि सम्भवेत् उभावपि गमिष्यावः।" सांप्रतिमः तस्याः मुखमालोकयत्। मुखे चपलता खेलरता आसीत्। नीलाञ्जनायाः अनुरागं सम्यक् निरूप्य अहसत् सांप्रतिमः। कुटिलरीत्या च पुनरपश्यत् तस्याः सर्वाङ्गमपि।

सर्वं सम्पन्नम्। सांप्रतिमः कियत्कालं विश्रान्तः। ततः ब्राह्मणं मिलितवान्। ब्राह्मणी च आगता। सुखदुःखानि व्याहृतवती। शीलप्रज्ञः अपि कार्तज्ञ्यं प्रकटितवान्। सर्वे सानन्दं सांप्रतिमं विसर्जितवन्तः।

सांप्रतिमः पुनः प्रव्रज्यापथमागतः।

## ५

पल्लीप्रान्तम् । एको मार्गः पल्लीतः निर्गत्य दूरप्रान्तरे मिलितः । मार्गोऽयं मृद्भिः पृथुलः । मध्यः किन्तु वियुक्तः । वर्षाकाले वियुक्तोऽयं प्रदेशः जलनिर्गमनी इति कथ्यते । मार्गस्य अर्धम् । ततोऽपि अर्धम् । अस्य शेषभागो न दृश्यते । आरम्भस्तु पल्लीतः । शीलप्रज्ञः उद्याने उपविश्य सर्वदा इमं पृथक् पन्थानं पश्यति । क इमं निर्मितवान् ? किमर्थं निर्मितवान् ? कथं च मध्ये पृथक्ता ? नूनं वर्षाकाले मार्गस्य उपयोगिता नास्ति । जनाः अपि दुर्गति सम्मुखी भवन्ति । अस्य आदिः वर्तते । अर्धशेषोऽपि सम्यक् लक्ष्यते । किंतु समाप्तिः न दृश्यते । तथापि जनाः पन्थानमिमं स्पृहयन्ति । गमनाऽगमने च आनन्दन्ति ।

अन्धकाररात्री अपि मार्गस्य धवलता न नश्यति । पृथक्ता किन्तु तमसि मिलति । अर्धशेषः समाप्तीयति । दिवा च मार्गनिकटे गावः चरन्तो दृश्यन्ते । छागाः मेषाश्च परस्परं संघर्षमाणाः दृश्यन्ते । पङ्क्तिबद्धाः कृषकाः घासछेदनपरायणाः अवलोक्यन्ते । पश्चात् विलोकं विलोकं पक्षिणः कीटान् धरन्तो लक्ष्यन्ते । अत्र संध्या आनन्ददायिनी । अन्धकारः मनोहरः । रजनी स्वप्रकाशप्रवणा ।

......शीलप्रज्ञः अधुना पूर्णस्वस्थः । तं च गमनाऽगमनमभ्यसयति नीलाञ्जना । अयमर्धशेषमार्गः तस्य अभ्यासप्रदेशः । नीलाञ्जना सहायिनी सायंकालश्च अभ्यासकालः । प्रथमतः मार्गेऽस्मिन् स कुटिलं व्रजन् आसीत् । अधुना शनैरपि साधुः चलति । यदि कदा श्राम्यति । तदा नीलाञ्जनामारमति । तस्या अपूर्वस्पर्शः तमधिकं प्रचोदयति ।

नीलाञ्जनाऽपि सायंकालेऽस्मिन् तस्य स्पर्शं प्राप्नोति । गृहे तु कठोरमनुशासनम् । विवाहतः प्राक् कस्यापि पुरुषस्य स्पर्शनं महापापम् । केवलं सेवाकर्मणि एव करस्य स्पर्शः क्वचित् । अन्यथा न, बहिरपि जनदृष्टिः

भिन्ना। अत एव तां माता निषिद्धवती—"सदा सायंकाले तेन सह गमनं न शुभंकरम्। अधुना सः स्वस्थः। एकाकी गन्तुं शक्नोति। यथेच्छं भ्रमतु। कियद् दिनात् परं आचार्यः आगमिष्यति। तेन सह सः प्रयास्यति"—

शीलप्रज्ञः प्रयास्यति इति नीलाञ्जना अतितरां दूयते। मनागपि तं परित्यक्तुं नेच्छति। मनः सदा तद्भावदर्शनरतम्। उभयस्य कोऽयं संपर्कः सा ज्ञातुं न प्रभवति। किन्तु अनवद्य तारुण्यमनुभवति। अनुदिनं तस्य स्पर्शमेव कामयते शरीरम्। एकशय्यामभिलषति हृदयम्। एकमेव गृहमभीप्सति जीवनम्। एकत्र संस्थानमभिकाङ्क्षते सा चिराय संप्रति।

वारिताऽपि नीलाञ्जना अद्य तेन सह गच्छति। 'इतः परं नागमिष्यामि' इति वक्तुं न पारयति। केवलं शीलप्रज्ञस्य मुखे पश्यति—यावत् जीवनं तावत् शरदः शतम्। तावत् शरदः शतस्य पवित्रता। तावत् शरदः शतस्य अनाविकः सम्पर्कः। तावत् शरदः शतस्य दैविकप्रवृत्तिः तावत् शरदः शतस्य सौभाग्य—परिग्रहः·······

अर्धशेषमार्गेऽस्मिन् उभौ संचरतः श्रेष्ठिपरिपाटीषु शोभते शीलप्रज्ञः। नीलाञ्जनां निकटे लब्ध्वा आत्मानं बहुमन्यते। सर्वदा मधुवाता ऋतायते। मधु क्षरति दिवसः। मधु सिंचति रजनी। मधु संचिनोति सांध्योऽयं समयः। नीलाञ्जना अस्ति। सः अस्ति। मार्गः अस्ति। संसारः वर्तते। मधु विन्द्यते। सः अधुना नास्ति। भविष्ये वर्तते। भविष्यते नास्ति अतीते वर्तते। सः अस्ति। सोऽपि नास्ति। नीलाञ्जना अस्ति। नीलाञ्जना अपि नास्ति। इत्थं तस्य मानसे भावनाः उत्तरङ्गाः—अयमेव मार्गः स्यात्। तस्य गृहमत्र भूयात्। स च गृहस्थो भूयात्। नीलाञ्जना तस्य जाया भूयात्। सर्वं विद्येत·······

सायमासन्नप्रायम्—

चन्द्रस्य प्रकाशः क्षीणतरः। उन्नतस्वर्जूरस्य छाया स्पष्टीभवितुमुपक्रमते। छाया इयं मार्गस्य उपरि एकपार्श्वे स्थण्डिलिता। दूर्वापरिक्षीकृता

इयं खर्जुर-मूलात् कियद्दूरे स्थिरा। शीलप्रज्ञः छाया निकटमागतवान्। पार्श्वे अधोमुखी नीलाञ्जना। परितः दृष्टिं व्यवर्तयत् शीलप्रज्ञः। अपश्यत्– गवां पश्चाद् भाग एव श्वेताभो दृश्यते। ते च गृहोन्मुखाः। एकतः ग्रामस्य कोलाहलःवहन् आगच्छति। अन्यतो लक्ष्यते अर्धशेषमार्गः शीलप्रज्ञः नीलाञ्जना मुखमपश्यत्। मुखे यस्याः प्रसन्नस्मितम्। छायायामुपवेष्टुं शीलप्रज्ञः सामान्येङ्गितेन स्मितेन च निरदिशत्।

छायान्तर्निहितौ उभौ। परितः परिछिन्ना ज्योत्स्ना। पादतले कोमल-दूर्वा। उभौ उपविष्टौ।। तमसा तयोन्तरतमा। ज्योत्स्नास्नातः खर्जूरः। छायास्नाता नीलाञ्जना। तमसि अवगाहते शीलप्रज्ञः। स निर्वाक्। उभयमन्तरा क्षणिकस्तब्धता। नीलाञ्जनायाः पादयोः रौप्यनूपुराणि च निःशब्दानि। शीलप्रज्ञः तस्या मुखं द्रष्टुं नाशकत्। किन्तु दृष्टिः निबद्धा वर्तते तथापि नूपुरे। नूपुरोपरि हस्तं संचाल्य आरभत शीलप्रज्ञः—

"अञ्जने··· ····

नीलाञ्जनादेहतः एक उत्तापतरङ्ग अवातरत्। कम्पमाना सा नूपुरतः तस्या हस्तमवारयत्। किं तस्याः करमतिशयेन स्वहस्ते मुष्टीकृतवान् शीलप्रज्ञः। सहस्रतापतरङ्गा अखेलन् नीलाञ्जनायाः शरीरे··· मानसे ··· हृदये····। सा च पुनः पुनः वारयितुं चेष्टितवती। तस्याः एतादृग्भाव-मालोक्य सहासमवदत् शीलप्रज्ञः—"अञ्जने! आधुना त्वं अति-जटिला संजाता"

निम्नमुखी नीलाञ्जना कायेन मनसा वाचा च तस्य स्पर्शमनुभवन्ती आसीत्। दृष्टिषु तस्याः सर्वं द्वित्वायमानमासीत्। भावना च नयनं संक्रमते—दूर्वा नग्ना भवितुमुपक्रमते। खर्जूरः नग्नः। भूमिः नग्नोभवितुं चेष्टते। वृक्षः नग्नः। प्रणाली नग्ना भवितुं यतते। अर्धशेषमार्गः नग्नः। नग्नीभूता उपत्यक्ता आश्लेषप्रवणा। नग्नपर्वतः उत्कण्ठितः। आकाशः नग्नः। पृथिवी नग्ना भवितुं आत्मानं सज्जीकरोति।

कम्पितकण्ठस्य नीरवता तस्याः भग्ना अभूत्। सा अनुरुद्धवती— "बन्धो! गृहाय प्रस्थानं वरं भविष्यति। समायाता रजनी······"

शीलप्रज्ञः तस्याः वचनमुपेक्ष्य इव तोषमद्वचसा अवदद्—"अञ्जने! अहमद्य स्वस्थः। त्वन्निमित्तमेव....। तव सेवा, तव स्पर्शः तव शुश्रूषा च अद्यापि मे जीवनमर्पयन्ति। न मयि किमपि वर्तते तुभ्यमर्पयितुम्। अन्यथा मां विभावय। अहं श्रेष्ठी। वाणिज्यं मम जीविका। यत् किमपि कायमसे तत् सर्वमर्पयितुं शक्नोमि। न ते कोऽपि अभावः स्थास्यति। त्वं च राज्ञी भविष्यसि। किंतु नाधुना किमपि वर्तते। अतः तव सेवार्थमहं त्वयि चिरं ऋणी—चिरकृतज्ञः...."

तोषसिक्ता आसीत् नीलाञ्जना। हृदयं तस्या उच्छलद् आसीत्। सविनयमुदतरत् सा—"ममात्र किमपि नास्ति। भगवतो महावीरस्य आशिषा भवान् स्वस्थः।....तथापि मनाग् वक्तव्यं मे वर्तते"—

"वक्तव्यं....? भवतु! बहुवारं मत्तः वेदनायाः शब्दाः श्रुताः त्वया। परमद्य त्वत्तः मधुमधुरशब्दान् श्रोष्यामि"—अहसत् सः—

"तव मङ्गलार्थं बहुप्रार्थितः मया भगवान् महावीरः। बहुवारं मानस-पूजा च अयोजिता मया। अनेका मानसिकी च कृता—प्रतिज्ञाता अपि। वदतु...., यत् प्रेरयामि—करिष्यसि नु?" अधोमुखी सा।

तस्याः मृदुवचनं अस्य मानसं भिन्नदासीत्—

वद...., वद...., नूनं करिष्यामि"—

मनागविभाव्य सा अवदत्—"आगामिनी पूर्णिमादिवसे भगवतः महावीरस्य जन्मदिवसः आपतति। तद्दिने एव महावीरस्य दीक्षां गृह्णातु"—

"दीक्षा....? प्रलम्बं निश्वसितवान् शीलप्रज्ञः "ततः किं भविता?"

"जीवनं भवतः समुन्नीतं भविष्यति। सदा शान्तिः मिलिष्यति। दुर्गतिः अपैष्यति"—

"केन प्रकारेण ज्ञातवती?"

"आचार्यः एवं वदति। पिता, माता, बन्धुजना अपि तत् समर्थ-यन्ति"—

"बहुजानासि त्वम्"—इति सः तां निकटमानेतुं यतते। किंतु सा दूरीभवति।

"किं समर्थयति भवान्?" सा सकौतुकं तस्य मुखं पश्यति। मस्तकमालुडच—"नूनं"""नूनं करिष्यामि यद् वदिष्यसि।" निकटायते?

—ज्योत्स्ना घनीभवितुमुपक्रमते। नीलाञ्जनायाः करतः उष्णतां शुष्यन् आसीत् शीलप्रज्ञः। छायान्धकारे उभयस्य शरीरं निह्नुतमासीत्। शीलप्रज्ञः कल्पनाविष्टः। प्रसन्नवदना भार्या जीवने पीयूषसमा। नीलाञ्जना एव तस्य जीवने ध्रुवतारका। निजपरिधिच्छन्दसि स तां पुनर्नवीकरिष्यति। अस्मिन् खर्जूरच्छायातले तामेव निलयीकरिष्यति। स्वयमपि सुभर्त्ता भविष्यति—सुभर्त्ता भरति भार्यां कारयति स्वसदृशाम्। जीवनस्य काऽपि संज्ञा नास्ति। असज्जीकृतद्रव्याणां सज्जीकरणमेव जीवनम्। क्षणिकपरिचितेः परिणाम एव जीवनम् ...

नीलाञ्जनायाः गृहगमनविघ्नतामलक्षत शीलप्रज्ञः। विनयवशतः अवदत्—"अञ्जने ! प्रत्यागमिष्यामः?"

नीलाञ्जना तं स्थिर-नेत्रेण संपश्यन्ती उत्थातुमुपक्रान्ता। खर्जूरस्य छाया उभयतः अपसृता आसीत्। यस्याः परिवृत्तिश्च संकुचिता आसीत्। दीर्घता च संकीर्णा आसीत्।

●

अद्य दिवसः दीक्षामहोत्सवं आत्मस्थीकरोति । जनबहुलः सांप्रतिमस्य आश्रमः । बहवः सन्न्यासिनः, नैकाः सन्न्यासिन्यः, अनेकभक्ताः समागताः । कुत्र श्वेताम्बराणां सम्मेलनं भवति । कुत्र च दिगम्बराणां प्रवचनम् । कुत्र यदि केचित् ध्यानस्थाः । कुत्र अन्ये दीक्षादानरताः । कुत्र यदि नवदीक्षिताः हृष्टा दृश्यन्ते कुत्र दर्शकललनाः सेवापरायणाः दृश्यन्ते ।

दिवसस्य चतुर्थप्रहरः । बहवः जनाः आगम्यमानाः । बहवश्च पङ्क्तिबद्धाः दूरतो मानचित्ररेखा इव प्रतीयन्ते ।

ऋषभदेवः अद्यैव ज्ञानं प्राप्तवान् । महावीरः अद्यैव निर्वाणस्य निदानेमनुलब्धवान् । अद्यैव अस्य आश्रमस्य प्रतिष्ठा अभूत् । श्रद्धान्वितदिवसस्य अस्य इतिहासः पुष्कलो वर्तते । अतः अस्य विषये बहुजनकथा अपि प्रचलन्ति । निरीहाः ग्राम्याः अपि एतत् सर्वं निःसंकोचमङ्गीकुर्वन्ति । अनेकाः कामनाः, अनेका मानसिकी तेषां मनसि । अद्यापि केचन आगताः किंचित् संकल्पितुम् । केषांचित् संकल्पिता मानसिकी पूर्णा अभूत् इति ते पुनर्दर्शनार्थमागताः ।

नीलाञ्जनायाः अभीष्टमपि सिद्धमभूत् । सा आगता । न एकाकिनी । किंतु शीलप्रज्ञः सहायः । सा वाटं विस्मृतवती । गृहं विस्मृतवती । केवलं शीलप्रज्ञस्य दीक्षा मनसि । तदेव मानसिकीपूर्तिः । सा स्वयमुपस्थाय तं दीक्षयिष्यति इति सा कृतार्था भवति । दीक्षानन्तरं पुनरेकमानसिकीं संकल्प्य प्रत्यावर्त्तिष्यते । अतः आगमनसमयादारभ्य एतावदवधि शीलप्रज्ञस्य उपस्थितिं विहाय नान्यत् किमपि सा अनुभवति ।

धौतकेशा सा अपूर्वदीप्त्या शोभते । सामान्यतपनरक्तिमा तस्याः प्रेमावगाहनं रेचयति । बाह्याकृतिशान्तता तस्याः अन्तश्चपलता बहिर्गमनोत्सुका ।

शीलप्रज्ञस्तु धीरः मन्थरश्च। जनारण्येऽपि नीलाञ्जना तस्य अनुपदनिर्झरिणी।

आश्रमः जैनसंभारभारः। अभिषिक्तः सांप्रतिमः। श्वेताम्बरीयपूजासु देदीप्यते तस्य नश्वरशरीरम्। गर्वोद्धताकृतिः। गम्भीरं तस्य मुखमण्डलम्। परितः जैनस्तुतिः। भक्तानां जयजयध्वनिः। दर्शनार्थं कोलाहलः। लोकान् दूरीकृत्य दर्शनार्थं प्रविशति शीलप्रज्ञः। अनुसरति नीलाञ्जना। युगपत् उभौ प्रणतौ। नेत्रमुन्मील्य अपश्यन् इव अपश्यत् सांप्रतिमः। उभयस्य घनिष्ठसहभावमवलोक्य सहसा सः कोपाविष्टः अभूत्। निमीलितनेत्रः स नानाविधमन्वचिन्तयत्।

—शीलप्रज्ञः मृतप्राय आसीत्। तस्यैव सहायेन सः जीवितः। किंतु अद्य तस्य इच्छा विरुद्धवृत्तिमवलम्वते। यथेच्छमाचरति। सांप्रतिमः धर्माचार्यः। न कदाऽपि इमं सहिष्यते। सः यद् इच्छति तदेव भविष्यति। स धर्माधिकारी। धर्माधीश्वरः। धर्मरक्षी। यद् आदेक्ष्यति तन्नूनं भविष्यति। धर्मः यद्वदति तदेव सत्यम्। धर्मावतारः यद् निर्दिशति स एव पन्थाः। धर्माचार्यः यत् कथयति तदेव आचरणीयम्। धर्मस्य निकटे धर्माचारस्य पुरतः वैयक्तिकसमुदाचारः न स्पृहणीयः। 'धर्मो रक्षति रक्षितः'। कोपाविलभावनासु संतरन् आसीत् अभिषिक्तः सांप्रतिमः।

प्रेमिकपिताऽपि निजकन्यायाः अनाविलप्रणयं न सहते। आदर्श-प्रेमिका मातापि निजदुहितुः समुदाचारं न सहते। अन्यस्य कस्य कथा ? सांप्रतिमः केवलं शास्त्रकीटः। शास्त्रं पठति, अभ्यसति। किन्तु उपयोगं न जानाति। शास्त्रवलेन धर्मप्रतिष्ठासुः। शास्त्रपाण्डित्यवलेन अन्यस्योपरि धर्मन्यस्तेच्छुः। न कदा कस्मात् किंचित् प्राप्तवान्। न वा कस्य समृद्धौ सुखमन्वभवत्। केवलं धर्मं जानाति। शास्त्रं जानाति। सन्यासीभूतशब्द-कतिपयं जानाति। अनेनैव शास्त्रवलेन सः धर्मगुरुः। एकनिष्ठनिष्ठुरप्रवृत्तिवलेन शिरोरूढः। केवलं निजवृत्तिमभिनन्दति। निजकथां व्याहरन् आनन्दति। उपासकेषु निजकृतित्वं उदाहरन् सुखायते।

आचार्यस्य कोपोदासीनतामालक्ष्य नीलाञ्जना शनैः व्याहरत्—

"नमो नमः, गुरुदेव !"—

स्वरं सम्यक् आकलय्य नेत्रमुन्मीलितवान् सांप्रतिमः—

"अञ्जने ! अभिप्रायः ज्ञातः।"

"दीक्षावेला विलम्ब्यते, आचार्य !"

"याहि, मन्दिरस्य दक्षिणप्रकोष्ठे उपासकः तक्षको वर्तते सः अद्य दीक्षादाता, याहि"—

शीलप्रज्ञः पशुरिव दण्डायमानः सांप्रतिमः तदुपरि दृष्टिमपि न क्षिपति। पृष्टोऽपि नोत्तरति। सांप्रतिमः तमवजानाति इति विचिन्त्य सः विषीदति। तस्य उपस्थितिं च सांप्रतिमः न कामयते इति सः व्यथते। सः ज्ञातुं न प्रभवति किमर्थं स अत्र आगतवान् ? दीक्षायाः किं वा तात्पर्यं अस्ति ? यत्र आदरः नास्ति, स्नेहो नास्ति, कुशलपरिप्रश्नो नास्ति तत्र दीक्षाग्रहणे को वा लाभः ? सांप्रतिमस्य अर्धनिमीलितक्रूरदृष्टिं स लक्षयन् आसीत्। समस्तप्रणयचिन्ता मनसः वाष्पायितुमुपक्रान्ता आसीत्। प्रत्यागन्तुं मन उद्व्यग्रमासीत्। सहसा नीलाञ्जना तस्य हस्तं धृत्वा अग्रेसृतवती। सांप्रतिमस्य धर्मदृष्टिः उभयमनुसरन्ती आसीत्।

दक्षिणप्रकोष्ठे तक्षकः घातक इव उपविष्टः। निकटे एकस्मिन् बृहत् पात्रे अग्निः सञ्चितः। सम्मुखे महावीरस्य प्रतिमूर्तिः। अन्यपार्श्वे श्वेतवसनानि पुष्पगन्धमाल्यानि च। सद्य लण्डितः तक्षकः सहसा नीलाञ्जनामवलोक्य हृष्टोऽभूत्। किं तु ततः शीलप्रज्ञं दृष्ट्वा अधोनमितोऽभवत्। तत्रोपविष्टः नापितः उभयं पुनः पुनः पश्यति। मनसि च दूयते। आत्मानं धिक्करोति। चिन्तयति सुन्दराकृतिद्वयमधुनैव असुन्दरं भविष्यति। गृहस्थो भिक्षुको भविष्यति। स्थितिवान् द्वारं द्वारं भ्रमिष्यति। गृहवान् वृक्षवले स्थास्यति, सुन्दरस्य असुन्दरीकरणमेव किं धर्मः ? त्यजैतत्। मम तु धर्मः मुण्डनीकरणम्। इयं च मे जीविका। अन्यथा चिन्ता अत्र वृथा। लवणवणिजः विमानसंवादे का अवश्यकता ?

तक्षकः पद्मासनस्थः। शीलप्रज्ञं पद्मासनस्थोभवितुमुपादिशत्। किन्तु नीलाञ्जनां अपवारितवान्। नीलाञ्जना कुण्ठिता आसीत्। तथापि अनेक-मङ्गलकामनाभिः सह सा वहिर्द्वारे प्रतीक्षितवती। प्रकोष्ठद्वारं पिहितम्। वहिरुपविश्य नीलाञ्जना केवलमन्तर्घटितध्वनिमाकर्णयति।

अन्धकारे गुहाप्रकोष्ठः। दीपालोकः क्षीणः। धूपः अग्निबिन्दुतः। उत्तिष्ठते। शान्तमहावीरस्य नग्नमूर्तिः शिथिला अवलोक्यते।

निरीहपशुरिव केवलं पश्यति शीलप्रज्ञः। चिन्तयति नीलाञ्जनाम्। तस्याः कैशोरसुलभवचनम्। तस्याः मानसिकी अद्य पूर्णा भविष्यति। अतः सर्वामपि प्रतिकूलभावनामुपेक्ष्य यत् किमपि अङ्गीकर्तुं प्रस्तुतः।

मुण्डनाय आदिशत् तक्षकः। नापितः अनिच्छन्नपि तं मुण्डीकृतवान्। तत्रैव तस्य स्नानं समापितम्। श्वेताम्बरं च परिधापितवान्। मार्गं च निरदिशत् नापितः—

"अस्मिन् मार्गे एव गच्छतु। दीपालोकः दृश्यते। तत्रैव भवता उपस्थातव्यम्"—

निरुत्तापज्योतिः महावीरस्य पादयुगलं प्रकाशयति। तत्रोपाविशत् शीलप्रज्ञः। भक्त्या मस्तकस्तस्य अवनतः। तालपत्रलिखितं मन्त्रं वाचयितुमादिशत् तक्षकः।

"वारत्रयं मन्त्रमिदं वाचयितव्यम्। महावीरनाम्ना च संकल्पो विधातव्यः। सत्यात् न प्रमदितव्यम्। धर्मात् न प्रमदितव्यम्।"

शीलप्रज्ञः तदङ्गीकृतवान्। दीपालोकेन च तत् वाचयितुमारब्धः—

ओं नम ॥ ओं नमः ॥ ओं नमः ॥

यदा विपदः घनीभवन्ति
यदा दुःखानि व्यथयन्ति
यदा मनः अनुतापैः आविलीभवति
यदा क्षतानि गभीरीभवन्ति

यदा जरा आत्मानं कवलीकरोति
यदा व्याधिषु अङ्गानि पच्यन्ते
यदा चाहं निरुपायः..........
तदा भगवन्..........!
शक्ति देहि....शक्ति देहि ...शक्ति देहि—
अदृश्ये किञ्चित् द्रष्टुम्
समुचितसमये समुचितं वक्तुम्
कर्त्तुमपि......................॥

ततः तक्षकः आदिशत्—"नयनं निमीलय। रत्नत्रयस्य संकेतस्वरूपं देहे रत्नत्रयं गृहाण। आवेदनमुद्राबद्धो भव हस्तं च प्रसारय"—

तथाकृतवान् शीलप्रज्ञः। मनसि किंतु भीतिः प्रबला अभूत्। तक्षकः अग्निपात्रमानीतवान्। तत्र रत्नत्रयस्य संकेतलौहः ज्वलन् चण्डिम आसीत्। तदानीय शीलप्रज्ञस्य हस्ते स्थापितवान्। सहसा "ओ....!" इति चीत्कृत्य शीलप्रज्ञः भूतलशायी अभूत्। तदानीमेव तस्य हृदयं लक्षीकृत्य वक्षसि पुनः तप्तलोहं निहितवान् तक्षकः। ज्वलनज्वालायां पुनः पुनः चीत्कृत्य आहतहिंस्र इव सर्पिलः अभूत् शीलप्रज्ञः। चीत्कारः गुहाप्रकोष्ठे प्रतिरणित आसीत्।

आहतध्वनिं श्रुत्वा बहिस्था नीलाञ्जना व्यथातुरा आसीत्। किमभूत्? किमभूदिति सा नानाभावनाक्रान्ता। अतीव असंयता। इतस्ततः प्रधावति। प्रकोष्ठद्वारं पुनः पुनः ताड़यति। किं तु प्रत्युत्तरं न प्राप्नोति। पुनः प्रधावति सांप्रतिमस्य अभिषेकमन्दिरम्। उत्फणसर्पिणी इव सा असंयता। जनान् अपवार्य सांप्रतिममन्वेषयति। केशाः तस्याः पर्याकुलाः। आननं रक्ताभम्। वेशः सज्जाशून्यः। न किमपि कमपि वदति। अन्विष्यति इतस्ततः। परन्तु सांप्रतिमं न प्राप्नोति।

अन्ततः कति ग्रामजनान् अमिलत् दीक्षाविषये च अपृच्छत् केचन अवदन्—दीक्षान्तरं नारीमुखदर्शनं निषिद्धम्। अतः यः दीक्षां गृह्णाति

न सहसा दीक्षागृहात् निर्गच्छति। सन्यासिनिवासं केवलं गच्छति। तत्र च कियद्दिनमतिबाहयति। ततः भिक्षामटति। ततः दीक्षायाः प्रारम्भिककर्म समाप्यते।

अन्ये अवदन्—अधुना एकः युवको दीक्षां गृहीतवान्। सः मूर्च्छितः। अपरे गृहागमनवार्तां कुर्वन्ति।

न किमपि मुक्ततया शीलप्रज्ञविषये वक्तुं प्रभवति। किं वा वदिष्यति? यदि आत्मीय इति वदिष्यति तर्हि जनाः हसिष्यन्ति। ते तस्य विषये सर्वं जानन्ति। यदि अधिकतया निजानुरागं प्रकटयिष्यति तर्हि ते पश्चात् अपवदिष्यन्ति। ग्राम्यास्तु अपवादं विना स्त्रीपुरुषविषये अधिकं किमपि न जानन्ति।

लज्जाशीला सा सर्वत्र दर्शं दर्शं क्लान्ता अभूत्। सांप्रतिमं न प्राप्तवती। समस्तप्रतीक्षा व्यर्था अभूत्। यदि किंचित् परिचितजनं प्राप्य शीलप्रज्ञविषये पृच्छति। तर्हि उत्तरं प्राप्नोति—"स पुरुषः! तस्य चिन्ता मास्तु। यदि गुहान्तः प्रविष्टः तर्हि निर्गम्य प्रत्यागमिष्यति।

नीलाञ्जनायाः मनस्तथापि अबाध्यमासीत्। नयनस्य लोतकानि कपोले वन्यायितानि। नासिकातः नवनदी प्रवाहोन्मुखा भवति। कण्ठः वाष्परुद्धः। करभे अञ्जनं लिप्तम्। चेलाञ्चलं च मुखे आर्द्रीभवति।

—अपराह्णं काकलिकलुषितम्—

दूरागता वायसी इव प्रत्यावर्तते नीलाञ्जना। सर्वाङ्गं घर्माक्तम्। शब्दमुखरा गतिः। पदक्षेपस्तथापि मन्थरः। अञ्चलं पश्चात् उड्डीयते। केशाः पृष्ठात् असंलग्नाः। भावनाः विषादक्लिन्नाः। दूरतः गुहाकोषे लक्षयन् आ-ीत् सांप्रतिमः।

## ७

शीतार्त्त-प्रभातस्य शीतल-मवगाहनं समाप्तम्। आर्द्रवसनं परिधाय कुज्झटिकासु परिहरन्निव आश्रममागच्छति शीलप्रज्ञः। कटिवस्त्रं विहाय न किमपि देहे वर्त्तते। कमण्डलुं दक्षिणहस्ते वहन् प्रेत इव स आश्रम-मुपसर्पति।

—सूर्यस्य आदिमरीचयो विकीर्णाः—

श्वेतांबरं परिवर्त्य शीलप्रज्ञ आश्रमात् निर्गतः। उपासनार्थं दरीमुख-वृक्षतले उपविष्टोऽभूत्। मुण्डितमस्तकं तस्य रश्मिपानरतम्। विक्षत-हस्तद्वयं निष्क्रियम्। ज्वलनज्वाला तथापि व्यथयति। श्वेतोत्तरीयं वक्षसः मनागपसार्य व्यलोकयत् सः—लोमानि ज्वलितानि। क्षतं च दीर्घीभूतम्। तदुपरि च चर्म वल्कलितम्। क्षतं निरीक्षते शीलप्रज्ञः। सहसा नीलाञ्जनायाः नूपूरस्य कति भ्रान्तिमत्ध्वनयः कर्णपथमागताः। सः पश्चात् अपश्यत्—न कोऽपि वर्तते। केवलं गिरिगुहायाः विशालतममुःखं निजप्राचीनतां व्याहरति। नयनं न्यमीलत् शीलप्रज्ञः। नीलाञ्जनायाः पूर्णरूपं मानस-मानेतुमयतत। उदभासत मनसि····नीलाञ्जना एका नारी। नारी···· सुप्तशक्तेजननी। उपासनायाः आदिगायत्री। जीवनाय महती तृप्तिः। नारीदर्शनतः एव ऋषभदेवः ज्ञानपथमारूढवान्। महान् तीर्थङ्करः संजातः। मुक्तचिन्तकोऽभूत्। स राजा आसीत्। किन्तु राज्यं नेष्टं तेन। सर्वं परित्यक्तम्। किं चिन्वतं तेन? "अत्र वा? तत्र वा? वत्र वा? अत्र वा? अत्र वा? तत्र वा?" मुक्तचिन्तकः न कदा द्वैतवृत्तिमङ्गीकरोति। न वा आवद्धो भवितुमिच्छति। सः बहूनां पिता भवितुं बहुमन्यते। न तु लघूनां नेता भवितुम्।

सहसा ज्वलामन्वभवत् शीलप्रज्ञः।

वक्षसः उत्तापवारणाय वस्त्रमुत्तोलितवान्। किन्तु क्षतं दृष्ट्वा अतिशयमदूयत। निजवक्षसः असौन्दर्यं च नासहत। कण्ठः तस्य वाष्पाछन्नोऽभूत्। अद्य सेवार्थं न कोऽपि वर्तते। स्वयं स्वस्य सेवकः। वक्षसि हस्तं निधाय धीरमुदचारयत् दुःखेन—" अञ्जने....! अ ञ्ज ने"....

मध्यमानादः तस्य मध्यमायां स्थितः। पुनस्तदेव मन्त्रं जपितुमारभत—

.... तदा, भगवन्....!

शक्तिं देहि....शक्तिं देहि....शक्तिं देहि

अदृश्ये किंचित् द्रष्टुम्.... ....

समुचितसमये समुचितं वक्तुम्

कर्तुमपि...."

कमण्डलुतः वाष्पमुद्गच्छति। शीलप्रज्ञस्य भाराक्रान्ता दृष्टिः तत्र सन्नद्धा। उत्तापमासाद्य क्षतानि तस्य ज्वालामुद्दीपयन्ति। तन्निरीक्षते सः। पुनः पुनः अनुतपति। क्षतानि उद्वल्कलयति। तदुपरि च मध्ये मध्ये तस्य अङ्गुल्यः सरीसृप्यन्ते। देहः शुष्कोऽनुभूयते।

"युवजीन! इत आगम्यताम्"—कश्चित् आश्रमस्थः शब्दापितवान्। शीलप्रज्ञः स्वात्मनि निविष्ट आसीत्। शब्दं श्रुत्वा मन्द्ररीत्या उत्थातुमचेष्टत। अवसरेऽस्मिन् उत्तरीये रक्तचिह्नानि अन्वपश्यत्। क्षणं स्तब्धः अभूत्। सम्यक् देहमैक्षत। वक्षःस्थलं रक्ताक्तम्। उदरे कियत्य धाराः लोममूले आवर्त्तिताः। तत् परिष्कर्तुं पुनः पल्वलं गतवान्। तटे यदा अवनम्य जलमाददाति। तदा पश्यति स्वच्छायां जले—आकृतिः कङ्कालसारा। कस्मात् गभीरप्रदेशत आगत्य प्रेतोऽयं सम्मुखीनः तदाकलयितुं न शक्नोति। सः असुन्दरः—कुत्सितः, कदाकारः। पूर्वज्योतिः तस्य निमीलितम्। आत्मानमपि परिचेतुं न शक्नोति। भीत्या आदर्शनेच्छया जलच्छायोपरि रक्ताक्तमुत्तरीयं निक्षिप्तवान् शीलप्रज्ञः। जलच्छाया पुनः विकृता। शीतकम्पितदेहे लोमानि तीव्राणि अभूवन्।

निःसहायमुहूर्ते एव मनुष्यः आत्मनः परिचयं प्राप्नोति । शीलप्रज्ञः अनुभवति–शतवारधौतमपि उत्तरीयं न कदापि रक्तचिह्नं परित्यक्ष्यति । इत्थं कति रक्तवस्त्राणि आदाय इतः प्रभृति सः भ्रमिष्यति । ततः सर्वं परिसमाप्स्यति ।

युवश्रेष्ठी युवजीनः संजातः । श्वेताम्बरे तस्य श्रेष्ठिदुकुलमन्तर्गतम् । श्रेष्ठिगौरवं समाधिस्थमभूत् । कियान् उत्साहः, कियान् दर्पः, कियान् अहंकारः, कियत्यः कल्पनाः, कियन्ति विनिद्रकर्माणि........सर्वं नीरवम-भूत् । अद्य सर्वत्र बंधुरता–गम्भीरता–झञ्झीया उपशान्तता....। श्रेष्ठी श्रेष्ठित्वं हारितवान् ।

सर्वं भ्रष्टं तेन । किन्तु कस्यार्थम् ? तद्दिने यदि मरणमभविष्यत् तर्हि श्रेष्ठित्वस्य सार्थक्यमस्थास्यत् । सः जीवनं प्राप्तवान् । केवलं ज्वालार्थं वा ? आत्मनः प्रेतीकरणार्थं वा ? अद्य किमर्थमियमवस्था ? किमियं तर्हि अन्तर्घातिता । उपकृतिषु नीलाञ्जनायाः प्रच्छन्नकृतघ्नता ? नहि, नहि इत्थं न कदापि भवितुं शक्नोति । अञ्जना सरलस्वभावा । न सा कदा अपकृतिं चिन्तयितुं प्रभवति । नेत्रं न्यमीलत् युवजीनः । समक्षे केवलम-भासत....विपर्यास....संदेह....विपर्यय....विकल्प....अत्र वा ? तत्र वा ? इयं वा ? तद् वा ? असौ वा ? इतो वा ? ततो वा ??........

अधरः शुष्यति । तदुपरि जिह्वां चालयति युवजीनः । हस्तः किमपि स्पर्शं ज्ञातुं न शक्नोति । केवलदर्शनश्रवणद्वारा वस्तूनि परिचिनोति । हस्तः वस्तुसमो भवति । सः अनुभवति—प्रेतीकृतदेहे किं वा प्रयोजनम् ? यदि सः दिवंगतः स्यात् तर्हि अधुना नवदेहं प्राप्स्यत् । किं वा करिष्यति अधुना ? कुत्र गमिष्यति ? गृहं प्रत्यावर्त्तिष्यते ? तत्र न कोऽपि वर्त्तते ! पितरौ बहुकालात् दिवंगतौ । भ्रातरः वणिग्भूय यत्र कुत्रापि निवसन्ति । ते तु अस्य हीनवीर्यतां न कदापि अभिनन्दिष्यन्ति । वणिक् सदा स्वार्थ-परः । तन्निकटे ममता नास्ति । अवस्थामिमामवलोक्य ते उपहसिष्यन्ति । भगिनी तु स्नेहमयी । साऽपि जन्मतो नास्ति । तर्हि....। नीलाञ्जना वर्त्तते । तस्याः समीपं गमिष्यति । सकलदुःखं निवेदयिष्यति । तस्याः

शाटीकाञ्चले नयनतः अश्रु अपवार्य क्षणमाश्वस्तो भविष्यति । कम्पित-तर्जनीपुरोभागे नेत्रकोणतो लोतकमपसारितवान् युवजीनः ।

आश्रममुपसरन् आसीत् शीलप्रज्ञः । नीलाञ्जनाया प्रसन्नप्रतिछविः मनसि तस्य खेलति । अन्यमनस्कतया सः आश्रममुपश्लिष्टः ।

"प्रविश्यतां, युवजीन !"—अन्तरादिशत् सांप्रतिमः ।

कातरभावेन स अभिवादनं विज्ञापितवान् ।

"एतावत् कालपर्यन्तं कुत्राऽसीत् भवान् ?"

"पल्वलत आगच्छामि एव"—

"नैषः साधुनियमः । प्रथमतः नियमभङ्गः क्रियते भवता । इतः प्रभृति यथाकालं प्रवचने उपस्थातव्यम्"—

करचरणमेकीकृत्य दण्डायमान आसीत् शीलप्रज्ञः ! भाषा हृदये रुद्धा आसीत् । क्रोधः अन्तस्थ आसीत् । मनसि कति हिंस्र-प्रकोष्ठा सृष्टा आसन् । आत्मप्रसादरत आसीत् विद्रोहः ! "अद्य प्रवचनदिवस इति ज्ञातं वा ?

"जाने"—नमिततया युवजीनः स्वीकृतवान् ।

"तर्हि, कथं विलम्बः—"

निरुत्तर आसीत् युवजीनः । सांप्रतिमस्य ऋक्षशरीरं च निरीक्षमा आसीत् ।

"उपविश्यताम् । श्रूयन्तां नियमाः—"

भवन्तः उपासकाः । जैनधर्मस्य प्रचारार्थं प्रसारार्थं च दीक्षिताः अद्य च नवदीक्षितानां सप्तमदिवसः । श्वः प्रभृति ते भिक्षाटनं करिष्यन्ति एतदर्थं कति नियमाः अवश्यं पालनीयाः । प्रथमतः दिवालोकतः दीपा लोकपर्यन्तं धर्मप्रचारार्थं संचरणीयम् । कस्यापि गृहे वासो न विधेयः वृक्षमूले, नदीकूले पुष्करणीतीरे वा आश्रयो नेतव्यः । अहिंसा अस्मा धर्मः । अयमपि आचारपरकः । यथा मधुपः प्रतिपुष्पं संचरति तथ

प्रतिगृहं सञ्चरणं समापनीयम्। ततः परं आहारो न ग्रहीतव्यः। आलोकः न दीपनीयः। मुखं सदा आच्छाद्यम्। अहिंस्रतया स्थातव्यम्।

केनाऽपि सह अकारणं न जल्पनीयम्। सर्वदा स्त्रीणां सामीप्यं "परिहार्यम्",

"यदि कश्चित् किंचित् ददाति"—कश्चित् उपासकः अपृच्छत्।

"न ग्रहणीयम्—"

"एषाऽपिभिक्षा—" शीलप्रज्ञः स्वरितवान्।

"भोजनं, अनर्घधवलवसनं च विहाय नाधिकं ग्रहणीयम्। याचनीयम् वा—"

"तर्हि, शीतकालेऽस्मिन् केनोपायेन शरीरं संरक्षणीयमम्?"—शीलप्रज्ञः पुरःस्थापितवान्।

"देहः क्लेशनीयः। विरूपीकर्तव्यः। एतदर्थं प्रथमतः मुण्डनीकरणं प्रारम्भिकम्—"

'केशस्य मुण्डनमनावश्यकमाचार्य! क्लेश एव मुण्डनीयः—"

"शीलप्रज्ञ! धर्मः औद्धत्यं न सहते। स्वेच्छाचारः अत्र धर्मविरुद्धः। धर्मः आचारं नियमयति। अतः यद्वदति तदेव कर्तव्यम्। जीवनविनिमयेनाऽपि धर्मः रक्षणीयः।"

"अयं भवतः स्वेच्छाचारः, आचार्य!"

"शीलप्रज्ञ! एषः तव हीनसंस्कारः। हीनसंस्कारः असामर्थ्यं प्रकाशयति। अधिकं न वक्तव्यम्"—

"एषा भवतः सांप्रदायिकी वागपि संस्कृतिविरुद्धा!"

"शीलप्रज्ञ! धर्मः नैकस्य। अयमनेकानुमतः। अनेकैश्च संरक्षितः। अतः न कोऽपि धर्ममुक्तो भवितुमर्हति। सर्वे धर्मबद्धाः। मुक्तसमुदाचारः नाङ्गीक्रियते अस्माभिः। एकोऽहम्—अनेकस्य प्रतिनिधिः। यदहं वदामि तदेव अनेकानुमतम्। अतः दीक्षाग्रहणात् परं त्वमपि न मुक्तः। मुक्तपूजा केवलं मनसि क्रियताम्।

मुक्तमनुष्यपूजा एव मनुष्यसंस्कृतिः। मुक्तबन्धुता च संसारनिर्बन्धे मौक्तिकम्।

"युवजीन ! न कोऽपि कस्यापि बन्धुः। बन्धुता नाममानसिकसम्बन्धः। इयं सांसारिकबन्धुता स्वार्थसंकुला। बन्धुवाछलेन स्वार्थसिद्धिः भौतिक-तृप्तिः च मानवस्य लक्ष्यम्। त्वमद्यापि संसारपथे बन्धुतां काङ्क्षसे। कस्तव बन्धुः ? त्वं वा कस्य बन्धुः ?" कपटहासेन अकम्पत सांप्रतिमः।

"अहं ...... अहं........अहमपराहमिकायाः बन्धुः"—

"शीलप्रज्ञ ! अधुना त्वं संसारनरके। न जानसि संसारोत्तरपदार्थम्। धर्मः संसारोत्तरः। स एव चरमबन्धुः। सर्वशेषप्रतिभूः। स च जनानां सम्मिलितस्वरः। अतः स एव स्नेहेन बद्धव्यः। एतदर्थम् अपतृष्णतया देहः क्लेशनीयः। व्याधिरपि अङ्गीकर्तव्यः। सौख्यं परिहर्तव्यम्। सौन्दर्यमुपेक्षणीयम्। इन्द्रियतृषा शरीरक्लेशैरेव अपसरति। ततः मनुष्यः निर्वाणस्य निकटवर्ती भवति।"

"देहः केवलं धार्मिकसमाधानार्थमेका परिक्रमा भवितुं न शक्नोति, आचार्य !"

"युवजीन ! देहस्यापि उद्देश्यं वर्तते ! तदेव धर्मानुमतं महत्।"

"आचार्य ! जीवः स्थितिप्राणः। सुखलिप्सुः। प्रवृत्तिप्रेरितः। अत एव स इच्छति अशिवस्य शिवरूपताम्। निष्क्रियस्य सुक्रियताम्। कुत्सितस्य शिवितसुन्दरताम्...."

"विरम—विरम....शीलप्रज्ञ ! त्वनमभिज्ञः। न जानासि—धर्मेस्मिन् निर्वाणमतिमानसीयम्। श्रेष्ठसुखवत् चिन्मयवस्तु। अतः निर्वाणमस्माकं सर्वस्वम्। धर्मः अलंघनीयः किन्तु देहः ? देहः नश्वरः। क्षणभङ्गुरः। यत् भङ्गुरं न तत् कदा अविनाशि भवितुमर्हति। इयं मम अभिज्ञता"—

"अभिज्ञता प्रवृत्तिप्राचीरं न कदा लंघितुं शक्नोति, आचार्य !"

"प्रवृत्तिः अवरोद्धव्या। धर्मस्य महापथे महान् एव माननीयः"

"यदि नदी अनुसर्तुं शक्यते तर्हि नूनं सागरो मिलिष्यति। अतः लघुपथः प्रथमतः समाश्रयणीयो भवति, आचार्य ?"

"यदि सागरो वर्तते तर्हि नद्याः अनुसरणं किमर्थम् ?"

"सागरोऽपि कतिनदीनां समष्टिः, आचार्य !"

"शीलप्रज्ञ ! त्वमाश्रमबद्धः। आश्रमस्य यः नियमः स एव पालनीयः आचरणीयश्च। व्यक्तिसत्तायाः स्थानमत्र नास्ति। आश्रमः सामूहिकः। धर्मः समूहादर्शः।

शीलप्रज्ञः नीरवतया कोपाविष्टसांप्रतिममनुशीलयन् आसीत्। उद्वल्कलितक्षते तस्य नयनं निविष्टम्। मनसि च कति विक्षोभाः। देहः पीडनीयः ? संसार उपेक्षणीयः ? धर्मः साधनीयः ? निर्वाणमधिगन्तव्यम् ? इदमेव लक्ष्यम् ? अयमेव जन्मजन्मान्तरपथः। "शीलप्रज्ञ ! श्वः प्रभृति भिक्षाटनं कर्तव्यम्। भोजननिमित्तमेव यथोचितभिक्षा कर्तव्या। अधिकं न ग्रहणीयम्। यदि भिक्षा न मिलेत् तर्हि उपवासे दिवसो नेतव्यः"—सांप्रतिम उत्थाय बहिर्गतवान्।

उपासकैः परिवेष्टितः शीलप्रज्ञः स्थिर आसीत्। उपासका तं बोधयन्त आसन्—"इत्थं न वक्तव्यम्। सः धर्मगुरुः। मान्यः पूज्यश्च अस्माकम्। सः यद् वदति हितं वदति। तदेव अनुमन्तव्यम्। प्रतिवादी न भवितव्यः। त्वमत्र नूतनः। परिस्थितिं दृष्ट्वा कार्यं समाचरणीयम्",

शीलप्रज्ञनेत्रतः अश्रुबिन्दुद्वयं जघनोपरि निपतितम्। ततः उत्थाय सः बहिरागतः। मनो भाराक्रान्तम्। दुःखं कस्मै वा निवेदयिष्यति ? नीलाञ्जनायाः अनुरोधं सः साक्षरं पालितवान्। परमत्र सर्वं स्वप्रत्ति-विरुद्धमिति अनुभवति। ऋणमुक्तिनाम्ना हानिं सहते। व्यथां च निज-स्वीकरोति। हन्त, ऋणमुक्तेः परमपि न दुःखं परिसमाप्यते।

श्रेष्ठी अद्य सन्यासी। द्वारं द्वारं भ्रमन् भिक्षयिष्यति। भिक्षान्नेन च जीविष्यति। ततः....? ततः किं दीक्षा सफला भविष्यति ? तस्याः मनस्कामना पूर्णा भविष्यति....?

●

# ८

पुनः कियन्तो दिवसाः...??

नीलाञ्जनाया एकैव इच्छा-सा दीक्षां ग्रहीष्यति । श्वेताम्बरी भविष्यति । किन्तु मार्गोऽयमतिदुर्गम इति सा न जानाति । पतङ्ग इव जीवनं दग्धुमिच्छति । माता बोधयति—

"अस्मिन् वयसि न काऽपि सन्यासिनी भवति । प्रथमतः गृहस्था भव । तत पतिः पत्नी च मिलित्वा दीक्षां ग्रहीष्यतः । गृहस्थरूपेण धर्मः पालनीयः । सन्यासिनी मा भव । ये तु सन्यासिनः भवन्ति । तेषां वासो न गृहे । भिक्षार्थं ते इतस्ततः अटन्ति । सन्यासिनीनामपि इयं दशा । त्वं मम एकैव कन्या । चरमे अस्मिन् वयसि मां परित्यज्य कुत्र गमिष्यति । पिता अपि ते वृद्धः । त्वां विहाय न सः जीविष्यति । वचनं मे पालय हितं भविष्यति"—

नीलाञ्जना तु किमपि श्रोतुमनिच्छुका आसीत् । एकमेव लक्ष्यम् । सा शीलप्रज्ञेन सह-निवासं करिष्यति । गृहं निर्मास्यति । एकस्मिन् गृहे उभौ स्थास्यतः । मनः कथां किन्तु न वदति । अन्यथावचनेन मातरं भ्रमयति ।

इत्थं कियद्दिवसाः गताः । नीलाञ्जना एकदा मनोगतमवादीत् । सा श्रेष्ठिनं शीलप्रज्ञमिच्छति । किन्तु माता जुगुप्सया तस्या आग्रहं धिक्कृतवती—"वयं ब्राह्मणाः । अस्माकं जातिः वर्तते । अस्माकं कुलमर्यादा वर्त्तते । अस्माकं ग्राम्यसमाजः अस्ति । बान्धवाः विद्यन्ते । सर्वे मिलित्वा किं वदिष्यन्ति ? माऽस्तु........मास्तु........। इत्थं न आग्रहः कर्तव्यः । स तु यायावरः । अतिथिरूपेण आगत आसीत् कुत्र वासः ? किं शीलम् । किं कुलम् ? किमपि न ज्ञातमस्माभिः । केन प्रकारेण तस्मै त्वां प्रदास्यामि ? मास्तु...मास्तु........?"

नीलाञ्जना रोरुद्यमाना सती भोजनं त्यक्तवती ।—

माता तु सदा उदारा कन्यां प्रबोध्य तोषमद्वचनैः उक्तवती "अञ्जने ! वयं वृद्धाः संजाताः । अन्तिमेऽस्मिन् समये तव हस्ते अभिरूपवरस्य हस्तः पुष्पैः बद्ध इति द्रष्टुमिच्छामः । अयमेव मातुः पितुश्च अभिलाषः । त्वं किमर्थं अमान्या भवसि ?"

कन्यायाः अपरिवर्त्तितमतिं गतिं च आलक्ष्य माता अवदत्—"पश्य ! अञ्जने ! स तु अधुना जैनाश्रमे । सन्यासी समभूत् । सन्यासिनां संसरीकरणं निषिद्धम् । केनोपायेन वा स त्वां ग्रहीष्यति ? त्वमेकदा तत्र याहि । पश्य, तस्य अवस्था कीदृशी वर्तते । तं च अत्रागन्तुमामन्त्रय । ततः अन्या व्यवस्था करिष्यते"—

नीलाञ्जना स्नेहेन मातरमालिङ्गत् । मातुः सम्मतिमभिनन्द्य सा श्व एव आश्रम् आगमिष्यति इति निरचिनोत् । दर्शनपिपासा शमिष्यति । ततः सा तं प्रत्यावर्तयिष्यति । गृहमानीय सहासं जल्पिष्यति—अद्य अस्माकं मनस्कामः पूर्णः । त्वमपि ऋणमुक्तः । सायमेव अर्धशेषमार्गं गमिष्यामः । तत्र उपविश्य गृहनिर्मितयोजनां करिष्यामः । एकमेव लघुनिलयं निर्मास्यामः । विहगविहगीरूपेण तत्रैव जीवनमतिवाहयिष्यामः । जीवनं मधुरी भविष्यति । कामना चरितार्था भविष्यति—नीलाञ्जनायाः देहे कति उत्तापतरङ्गा अखेलन् । रात्रिः स्पर्शतृषायामुत्तप्ता आसीत् ।

........नीलाञ्जना प्रभातस्य अभिसारिका अभवत् । उत्फुल्लवेश-भूषिता । अरुणरश्मिषु स्नायन्तीव सा अभिसरति । अर्धशेषमार्गतः अवतीर्णः अन्यवक्रमार्गः । प्रातः शीतशीकरैः मनाक् अर्द्रः । तदुपरि च घासाः अवनमिताः । गमनसमये घासा एव तस्याश्चरणं स्पृशन्ति । तस्याः गौरचरणोपरि शीकरबिन्दून् परित्यजन्ति । घासपुष्पाणि शीकरसहितानि भूत्वा पादे संचीयन्ते ।

संसारार्थं अभिसारः तस्याः बद्धवेगः—

दिवसस्य तृतीयप्रहरः संजातः । माता इतस्ततः गृहकर्माणि करोति । पाकार्थमायोजयति । मनसि अनेककथां संगृह्णाति—कन्या वयस्का अभवत् । तदर्थं वरः अवश्यमन्वेषणीयः । किंतु सा तु तस्मिन् यायावरे अनुरक्ता । बोधिताऽपि न बुध्यति तदर्थं च सा आश्रमं गता । भवतु, यदि कन्या सुखिनी अस्माकं का हानिः ? किंतु तथापि सः यायावरः । तस्य परिचयः अपि न ज्ञातः । केन प्रकारेण तस्मै कन्या प्रदेया भविष्यति ?

सा सहसा द्वारे कश्चित् शब्दापयन् इव अशृणोत् । शनैः शनैः सा द्वारसमीपमागतवती ।

"भिक्षां देहि ......., भिक्षां देहि ..........मातः"—अन्यमनस्कतया शीलप्रज्ञः आवृत्तिं करोति । द्वारमुन्मोच्य अपश्यत् माता—

श्वेताम्बरः दण्डायमानः । परावर्त्य सा भिक्षामानयत् । भिक्षादान-समये शीलप्रज्ञः अनुभूतवान् माता तं न परिचिनोति । मुखे स्मितं जनयन् निजपरिचयं प्रदत्तवान् शीलप्रज्ञः—

"अहं शीलप्रज्ञः । सांप्रतिमस्य शिष्यः । कियद्दिनार्थं भवद्गृहे न्यवसम् ।" माता तस्य प्रेतीकृतशरीरं सम्यक् अपश्यत् । मनसि वैविध्यं विभावितवती । घृणामुखेन प्रत्यागन्तुमुद्यता । "नीलाञ्जना कुत्र वर्तते मात !" तदवस्थः शीलप्रज्ञः जिज्ञासितवान् । सहसा माता कोपमूर्तिः संजाता । यथेच्छं निन्दितुं शपितुं च आरभत—"त्वं स एव यायावरः । मद्गृहस्य अतिथिः । याहि, नीलाञ्जना नास्ति । प्रेतः । कुलाङ्गारः । यायावरः । सत्वरमपेहि । हीनसेवा न कर्तव्या । हीनस्य सेवया एव इयं मम दशा । मम गृहे आश्रयं नीत्वा ममैव द्रव्यं चोरयितुमिच्छति । नहि....? कुतः आगतः तस्मिन् इयत्ता नास्ति । अत्रागत्य सन्यासी संजातः । दूरमपेहि । सत्वरमपसर । गतवान् आसीः । पुनः किमर्थमागतम् । भिक्षाछलेन पुनश्चोरयितुम् ?"

"नहि, नहि ...मातः ! नेत्थं भणतु भवती—"

भयाकुल आसीत् शीलप्रज्ञः ।

"अपदार्थः। अकर्मण्यः। चौरः। यायावरः। याहि....। न पुनरत्र आगन्तव्यम्"—द्वारं पिहितवती माता। मनसि यथेच्छमभिशप्य सा अन्तर्गता।

चौरशब्दं निशम्य अन्ये गृहस्थाः वहिरपश्यन्। श्वेताम्बरः शनैः प्रत्यावर्त्तते। बालकाः तमनुसरन्ति। कोलाहलं कुर्वन्ति—"अयमुन्मत्त-सन्यासी। कुत्र गन्तव्यं, कुत्र न गन्तव्यं इति न जानाति।" शीलप्रज्ञः कमपि किंचित् न वदति। अधोवदनः प्रत्यगच्छति। तथापि बालकाः तमनुधावन्ति। केचन वृद्धाः बालकान् न्यषेधन्। तथापि कति अबाध्याः "उन्मत्तः—उन्मत्तः इति चीत्कुर्वन्त आसन्।

ग्रामप्रान्ते बालकाः विरताः। श्वेताम्बरः पूर्वगत्या पुरोऽटति। सः कुत्र गमिष्यति इति निश्चेतुं न शक्नोति। केवलं गच्छति—गमिष्यति अपि—ग्रामात् ग्रामान्तरम्, अभिशापतः अभिशापान्तरम्, अपमानतः अपमानान्तरम्, अभिलाषतः अभिलाषान्तरम्—ऋणतः ऋणान्तरम्, मुक्तितः मुक्त्यन्तरम्....कियद्दूरे तस्य मस्तकस्य पश्चाद्भागे लोष्ट्राघातोऽभूत्। रुधिरं प्रावहत्। श्वेतोत्तरीयं रक्ताक्तमभूत्। विवर्त्य सः पश्चात् अपश्यत्—ग्रामोन्मुखा बालका धावन्तः पलायमानाः। मस्तके उत्तरीयमबध्नात् शीलप्रज्ञः। पादपनिकटे विश्रान्तुं वक्रगत्या प्रस्थितः। मुखे तस्य विषण्णता धर्मरूपेण बहिरागता। पीडितकरद्वयं कम्पमानमासीत्।

पादपः शान्त आसीत्। पक्षिणो वार्त्तारता आसन्। कति गृध्राः स्वच्छायाभिः सह खेलन्त आसन्। छायातले कियन्तो मेषा रोमन्थयन्त आसन्। उन्नतघासाः सदृशतया हिल्लोलिताः। शीलप्रज्ञः तत्र उपविश्य श्वेतोष्णीषं च अवतार्य निजरुधिरं परिचिन्वन् आसीत्।

●

## ६

"त्वम्... नहि। भवान्....। नहि, त्वम्....त्वम्...."— किमर्थम् अज्ञातवासः.... ? कस्यकृते आत्मनिर्वासनम्.... ? कथं दीर्घनीरवता ? ममेच्छा त्वन्निकटं प्राप्नोति वा ? त्वदर्थं मे अनेकशुभेच्छा....अनेकमङ्गलभिक्षा अज्ञातस्य निकटे....।

त्वमधुना कुत्र....? कुत्र तव देशः ? अद्य कस्य वा मनुष्यस्य भावना ते मनसि.... ? कस्योपरि तव अभिमानम्.... ? किमर्थं ते अभियोगः ? अद्य सर्वम् अर्धम्....। मार्गः अर्धः। गृहं मे अर्धम्। जलम् अर्धम्। पवनमपि अर्धम्....।

........किमर्थं ते सन्देहः ? कस्मात् भयम् ? कथं वा आशङ्का ? अहमत्र प्रदीपं ज्वलयामि। मनो मम स्वप्नाच्छन्नम्। अद्य तु सम्पर्कस्य लाभक्षतिगणना न मया क्रियते। सम्पर्कोऽयमावयोः परिचित-परिणामः। यद्ययं सम्पर्कः त्वया मंस्यते तर्हि गृहं भविष्यति। यदि एतत्कृते वार्त्ता प्रेष्यते तर्हि मन्दिरं सृज्यते। एनं मानसमानीय पत्रोपरि रेखा अंक्येत तर्हि मत्कृते तत् काव्यं भविष्यति। यदि सकृत् आयास्यति तर्हि रूपरङ्गयोः संगमः भविष्यति। सर्वंहरायाः मे सर्वं मिलिष्यति।

........अद्य मन्निकटे न कोऽपि वर्तते। जीवनं दुर्वहं भवति। अदृष्टस्य दुःखभारः मदुपरि दोलायते। न जाने असह्यवेदनया कदा एका मध्यरात्रिः मां समाप्स्यति। कदा वा अन्य एकः समाधिः पितुः मातुश्च समाधिसमीपे हसिष्यति। दिनमद्य मासायते। मासः च युगायते। सर्वमधुना विगतम्। अतीतस्य सम्पर्कः एव मनसि संलग्नः। ज्ञातुं न प्रभवामि—कथमेतदर्थमेव प्रतीक्षारताऽहम्। मरणाय समस्तचेष्टा व्यर्था अभूत्। तथापि मरणस्य भयालुस्वप्नः न मां त्यजति। यद्यप्यहमशान्ता

तथापि मरणपरशान्तप्रहर इव शान्ता, शिथिला अपि। नयने अविरलं अर्धस्फुटकुमुदस्य लज्जास्नातमश्रु।

........न जाने–कथमिह गोपालकस्य वंशिस्वनं हृदये मे अनुरणनं सृजति। वृक्षलता धान्यक्षेत्राणि स्नेहीनि दृश्यन्ते। चन्द्रश्च आत्मसात् भवति। तद्दिनस्य अर्धशेषमार्गतः अद्य बहुवार्ताः श्रुणोमि। खर्जूरच्छाया च मामाकुलीकरोति। किं वा करिष्यामि ? न कोऽपि तथा विश्वस्तो वर्तते अन्वेषणाय प्रेषयितुम्। अहं च निरुपाया। कुत्राऽपि गन्तुं पन्थाः न दृश्यते। एकाकिनी वसतिः तथा मां न पीडयति तथा पीडयति जनानामाक्रोशः दुष्टानां घृण्यदृष्टिश्च। सांप्रतिमस्य करुणया तस्य सुदृष्टितले च जीवामि। तथापि एकाकिनीतया जीवितुं न मे वयः अनुमन्यते। न कदा मनुष्यः एकाङ्गतया मनुष्यत्वमाप्नोति। न शान्ति प्राप्नोति। न वा प्राप्तिमनुभवति। अतः देहो मे सहस्थीभवितुमिच्छति। श्रुतं मया साहस्थ्यं जीवने अपरिहार्यमिति। अद्य तु अनुभवामि—सहस्थता एव जीवनम्। साहस्थ्यमशेषधर्मस्य प्रतिभूः। सहस्थीभवनमेव सर्वस्य परिणतिः।

........वर्षत्रयं गतम्। तथापि तव सन्धानं न प्राप्तम्। सर्वे अवदन्—सः भिक्षाटनाय गतः। दूरदेशे स्थित्वा सम्भवतः त्वं मां विस्मृतवान्। अन्यजलवायुभिः सह परिवर्तितः। त्वं कथं वा ज्ञातुं प्रभवेः—

नारीमनसः वेदना कियती ? स्नेहार्थं नारी कियदातुरा कियती च उन्मादिनी, न त्वमवगमिष्यति। यदि स्तोकमपि एतत् अज्ञास्यः तर्हि सकृत् अन्ततः मां मिलित्वा "अहममुकप्रदेशमेतदर्थं गच्छामि" इति अवश्यं उक्त्वा अयास्यः। किन्तु किं कृतं त्वया....?

........भवतु, यद् भवितव्यमासीत्, तदभूत्। सर्वथा ईश्वरस्य इच्छा वर्तते। सा च सर्वतो बलीयसी। ईश्वरः मामिह परित्यक्तवान्। पुनश्च अवश्यं मां अन्विष्यन् वर्तते। तस्य अन्वेषणस्य अधिगन्तव्या भवितुं मया मार्गः अवश्यं प्रस्तावनीयः। "न जाने कोऽयं पन्थाः"—निर्णेतुं पुरोगामिनी

भवामि। परन्तु यत् करणीयमुपस्थीयते तदेव करोमि। तत् पापाय भवतु, पुण्याय वा भवतु, स्वर्गाय भवतु नरकाय वा भवतु। तथापि आत्मानं न विस्मरामि। अन्ततः "तस्मै" आत्मानं उपहरामि इति मे निश्चयः। तस्मिन् लाभो भवतु। क्षतिर्वा भवतु। तदर्थं न मे चिन्ता। चिन्ता तु अधुना त्वदर्थमेव ...। एतदपि किमर्थं न जानामि। ज्ञात्वाऽपि वक्तुं न शक्नोमि ...। नाहं तव प्रेमिका न वा पत्नी। तथापि मति व्यथा ...? मम अवस्था कीदृशी ..? मम च स्थितिः कुत्र....?

निश्चलझञ्झा इव अन्तर्मथिता आसीत् नीलाञ्जना। पितरौ स्वर्गतौ। अनेकदिनपर्यन्तं बन्धुजनानां गृहे निवस्य अद्य निजगृहमागता। पितुः मातुश्च स्नेहाधिक्यमतिव्यथयति। गृहं मरूयते। सर्वभावनाः तस्याः शून्यबिन्दूपरि सम्मिलन्ति। अङ्गने निष्करुणकाकलिः भीतिं जनयति। शून्यनयने केवलमस्पष्टभविष्यं नृत्यति।

बन्धुजनानां वचनमुपेक्ष्य सा आगता आश्रमे कियत्कालं वाहयितुम्। सांप्रतिमश्च अस्मिन् सहमतः। सांप्रतिमः अद्यः आगन्तु प्राक्प्रतिश्रुतवान्। अतः सा प्रतीक्षमाणा। सा निश्चिनोति—अवश्यमेकदा शीलप्रज्ञः आश्रममागमिष्यति। अतः आश्रमे प्रतीक्षा फलप्रदा भविष्यति।

●

अनेकमवशिष्टम्.......

शीलप्रज्ञ द्वारे द्वारे संचरति। भिक्षामाहरति। धनानि संचिनुते! निराडंबरभावेन च कालं नयति। कदा ग्रामस्य पाठशालायां स्वपिति। कदा च तीर्थीभूतवटमूले। कदा कस्य गृहस्थस्य अलिन्दे। कदा च मेलामहोत्सवेषु रात्रिः विनिद्रा भवति। किन्तु सर्वत्र नीलाञ्जनाया अस्पष्टछविः। नीलाञ्जनायाः मृदुस्वप्निलसंलापः। यदि कस्याश्चित् भिक्षां प्रतिगृह्णाति, तदाऽपि मनुते नीलाञ्जना एव भिक्षां ददाति।

स इतः पूर्वं निर्देशित आसीत् भिक्षाग्रहणात् परमाशीर्वदिष्यति। किन्तु अनुभवति तस्य यतिपात्रे कल्याणं न वर्तते। लाजालग्नधान्यमिव भिक्षायिततण्डुलमुष्टिषु कल्याणं संलग्नम्। निज शरीरमेव उत्पीडयितुं तमेव आशीर्भिक्षयति। मनः चेखिद्यते। एतत् सर्वं परित्यज्य पुनः प्रत्यावर्त्तितुं निश्चिनोति। किन्तु न पारयति। अर्थसरणिमारुह्य पुनः प्रत्यागच्छति। इतस्ततो भ्रमति। आत्मानं विविधरूपेण बोधयति।

यदि सः नीलाञ्जनां मिलिष्यति तर्हि विश्वासघातको भविष्यति। तस्याः उपकारस्य मर्यादाहानिः भविष्यति। तस्याः वचनमुररीकृत्य स एतावत् आगतवान्। तस्याः सेवया च जीवितः अद्यापि। एतदर्थं सकृदेव तस्यां कार्तज्ञ्यं कथं न प्रकटयिष्यति? अवश्यं सकृत् तया सह साक्षात्कारः आवश्यकः। इमां कथामपि स्मारयिष्यति यत् स इदानीं जीवितोऽपि मृतप्रायः...

....किमद्य पुनः सः श्रेष्ठी भवितुं न शक्नोति? भिक्षावृत्तिं परित्यक्तुं न प्रभवेत्। सर्वमपि कर्तुं शक्नुयात्। किं तु किंचित् विधानात् पूर्वं अवश्यं सा प्रष्टव्या। तस्याः मानसिकीतः आत्मा अनृणीकर्तव्यः। अन्यथा विश्वासघातकता भविष्यति। संपर्कः अजुष्टो भवेत्।

आत्ममर्यादा अवनम्येत। जीवने नेयमेका बृहती कथा। न वा एक विशालघटना। सा उपकृतवती। मरणमुखतः आर्यहलमाकृष्टवती दुर्गतिनाशाय महावीरस्य दीक्षार्थं प्रचोदितवती। नायं तस्या अपराधः इयं तु परिस्थितेः प्रतिकूलता—ग्रामस्य पाठशालाऽलिन्दे शयित्व चिन्तयति शीलप्रज्ञः।

....जीवनं भयपरिव्याप्तम्। रोगाद् भयम्। दैवदुर्विपाकात् भयम् शत्रुतः भयम्। शासकात् भयम्। तर्हि विवेकात् कथं न भेतव्यम् विवेकात् भये तु लाभो भविष्यति—

....सदा क्षमतासीनः धर्मावतारव्याजेन शठावतारः। अन्धपरम्परा माश्रित्य अन्यायमेव प्रश्रयते। अनुनयमुपेक्षते। निजगुरुत्वं च स्थापयितु अन्यान् पीड़यति। किंतु परिगणिता एव उदाराः बुद्धिमन्तश्च दृश्यन्ते अन्यस्य हृदयेन सह निजहृदयं मिलयित्वा, अन्यस्य समस्या स्वकीयसमस्य इति मत्वा बिचारयन्ति। हाय ! दुर्लभोऽयं जनः—

....अद्य विद्याऽपि मनुष्ये नास्ति। बुद्धिश्च व्यक्तौ न तिष्ठति लोकमतमेव बुद्धिः। संघनिर्माणं संधीकरणं विद्या। विज्ञापनीयप्रचार ए विद्वत्ता। कुलटीया वृत्तिश्च कुलीनता। अन्तःशून्यता एव आदर्शः—पार्श्व परिवर्तितवान् शीलप्रज्ञः। ग्रीष्मागमे मलयस्य गोपनस्पर्शमनुभव आसीत्।

....एका रीतिः यदि बहुदिनपर्यन्तं प्रचलति। क्रमशः सा परम्पर रूपेण गृह्यते। अस्याः परंपरायाः परिवर्तनं न सहजसाध्यम्। तथापि परिवर्तनीयम्। परम्परायाः एक एव आदर्शः न सर्वदा सभ्यतां जीवयि प्रभवति। अन्धधार्मिकता च न सदा सोढव्या। पारम्परिकः आदर्श अथवा अनुकरणीय आदर्शः यदा मानवस्य अधःपतनाय कल्पते इति केनापि प्रतिपादितम्, तदा स आदर्शो भूत्वा स्थातुं नार्हति।

....अपरं तु न सर्वं करणीयं समयसापेक्षम्। असमयेऽपि किंचि कर्तव्यं भवति। इयमसामयिकभित्तिः समयमेव निकटयति। अत

सम्मुखीनो भवितुं प्रस्तुतेः आवश्यकता । न समयस्य । समयो हि महान् शठः । विपर्यस्तः शीलप्रज्ञः आसीनोऽभूत् । मनसि अतीतस्य कति अस्पष्ट-मूर्च्छना: उत्थाय पुनः विलीनाः । गोधूलिषु सूर्यः धूसरः—

पाठशालामार्गे कर्मव्यस्तग्रामीणानां न काचित् प्रतिक्रिया लक्ष्यते। शीलप्रज्ञस्य नयनं पाषाणायितम् । मस्तके सः हस्तमचालयत् । अन्वभवत् कति केशाः पुनः श्रेष्ठिरूपमभिकाङ्क्षन्ते । कल्पनासु स्वप्नाः वार्तारताः—

अञ्जने ! न जाने, कस्य सम्मुखीनो भवितुमिच्छामि ?

समयस्य ? परिस्थितेः ? सांप्रतिमस्य ? अथवा तव.... ? किमर्थं च सम्मुखीनो भविष्यामि ? लाभार्थम् ? परिवर्त्तनार्थम् ? प्रत्यावर्त्तनार्थम् ? अथवा गुरुकथितनिर्वाणार्थम् ? मम भ्रमणजनितानुभूतितः इदमेव लब्धं मया यत् कति सामयिकसिद्धान्ताः जीवनं नियमयन्ति । इत्थं कति-सिद्धान्तार्थं मनुष्यः योगी भवति, उपासको भवति, साधकश्च भवति । अस्य एव सिद्धान्तस्य प्रचारार्थं मनुष्यः शासकः भवति, धर्माधिकारी च भवति । नाहं शासकः, न वा धर्माधिकारी, न योगी, न उपासकः, न वा साधकः । केवलं संचरिष्णुभिक्षुः—आचारग्राही....जीवनस्य समुन्नय-नार्थम् । दुर्गतितः आत्मनः मोचयितुम् । निर्भीकशिला भवितुम् । किन्तु अनुभवामि—जीविकायां जीवनं मे विगलितम् । अस्थिषु देहः निमीलितः । रूपरङ्गभयतः मरणस्य भयं मयि घनीभूतम् । आत्मा च अपवित्रो भवितुमुमक्रमते ।

तथापि आत्मविश्वासः न मे परिहृतः । अहं चिन्तयामि—आत्मा न कदापि देहं परित्यज्य तिष्ठति । देहात्मनोः समन्वयः मयि च जन्मतः संजातः । इदमेव साहस्थ्यं प्रतिक्षणं अनुभूयते । परमस्य समन्वयस्य समुन्नयनं न भवति । वरमधोगतिः मया लक्ष्यते । एतदर्थं कति नव-सिद्धान्तान् अवश्यं ग्रहीष्यामि ।

तदेव गृहीत्वा त्वामुपस्थास्यामि, उपहरिष्यामि च । ममायं सिद्धान्तः तव निकटे नूतनो न भवेत् । तथापि अहमिमं नूतनम् इति वदामि यत्

अन्यत् सर्वं पूरातनमिति विभावितं मया। किमत्र कारणमिति यदि पृच्छसि, तर्हि अहं वदामि—सर्वत्र कारणं दर्शयितुं न शक्यते। यतः अनुभूतिः युक्ति न सहते। आनुभविकसिद्धान्तः सदा नूतनः। यतः व्यक्तयो विभिन्नाः।

अञ्जने! मनुष्यः कति प्रश्नान् गृहीत्वा जन्म लभते। ततः प्रश्नेन सह क्रीडित्वा जीवनमारभते। किन्तु पश्चात् स्वयं प्रश्नमयो भवति। परमहं प्रश्नमयो भवितुं नेच्छामि। अहमुत्तरमभिलषामि। अतः पङ्कमेव विच्छिद्य अनुच्छिद्य परीक्षणं करिष्यामि।

जाने—पङ्कपरीक्षणाय आत्मानं पङ्किलीकरिष्यामि। तथापि पङ्किलीभवितुं मनः प्रेरयति। कारणं अहं शरीरी। शरीरस्य मोहः मयि पर्याप्तः। अहं विश्वसिमि—मोहे आत्मीयता अस्ति। आवयोः दूरता कियती? एतत् परीक्षणाय अहमितस्ततः भ्रमामि-भ्रमिष्यामि अपि—

अस्मादेव भिक्षाटनात् यथेष्टं संगृहीतम्। धनमपि पुष्कलं मयि। अतः मम उत्साहः परिवर्धितः। धैर्यमपि द्विगुणितम्। अधुना संगृहीतस्य सदुपयोगमिच्छामि। केन प्रकारेण एतद् विनियोजयिष्यामि, तत् चिन्तयामि। यदि एतस्य सदुपयोगः स्यात् तर्हि आवयोः पूर्णोदयः सम्भवेत्.... आश्वस्तिमन्वभवत् शीलप्रज्ञः।

शीलप्रज्ञः अविचलितः। तथापि अस्मिन् विषये निर्णयः नास्ति। जीवनस्य प्रतिश्रुति तन्निकटे भिन्ना। भिक्षाभोजनयोः परिधिषु अधुना सः भ्रमति।

अलक्ष्यं तस्य गमनम्....।

वन्या आयाति । तत्सहितमनेकवस्तु प्लवते । प्रवाहे वस्तूनि अपि पुरःसरन्ति । किं तु यदा वन्या दुर्बला भवति तदा कियत्परिमितं जलं मृत्तिका शोषयति । कियत् परिमितं नतप्रदेशे तिष्ठति । अवशिष्टानि समुद्रं प्रधावन्ति । परन्तु कति लघुयष्टिका वृक्षमाश्रित्य कियत्कालं तत्र निवसन्ति । ततः पवनेन पुनः तले निपतन्ति । लघुयष्टिरिव प्लवन्ती आगता नीलाञ्जना । सांप्रतिमस्य धर्मवृक्षे च लग्ना । सन्यासिनी-शालायां निपतिता ।

परितः अलसशान्तता । सन्यासिन्यः निलपीयमन्त्राणि जपन्ति । अपरिचितः परिसरः । सरससुन्दराकृतिः नीलाञ्जना उपविष्टा । निरतमन्य-मनस्का । शिथिलकुन्तला । असज्जवसना । देहे तथापि वयस्कविभूति-स्पर्शः । किन्तु निस्पन्दं हृदयम् । भावना असंहता—

"कुत्र गतिः ? एकतः अन्यत् ? एकतः एकम् ? पश्चाद् वा ? प्रति-मुहूर्तं वर्धते मनुष्यः । किन्तु वर्धनस्य गतिः—नीचैः, उच्चैर्वा ? अथवा स्थितिः वर्धते ? संवर्धनम्....कस्यार्थम् ? अपेक्षार्थम् ? उपेक्षार्थं वा ? कुत्राधुना सा गच्छति ? लक्ष्यतो निर्लक्ष्यम्, अथवा 'निर्लक्ष्यतो लक्ष्यम् ? नहि न मनुष्यः निजलक्ष्यमलक्ष्यं वा निर्णेतुं शक्नोति । 'सः यत्राऽद्य उपस्थितः तदेव तस्य लक्ष्यमासीत् ? इतः परं यत्र उपस्थास्यति तदेव भविष्यति तस्य लक्ष्यम्—

नीलाञ्जना नेत्रं व्यवर्तयत् । अपश्यत्—मन्त्रमथ्यमाना भिक्षुणी विरूपा । श्वेतवसनतले तस्याः मनुष्यसत्ता आत्माहुतिं प्रयच्छति । इयं युवती वा वृद्धा वा ? मस्तके केशो नास्ति । मुखमण्डले नारीसुलभलावण्यं नास्ति । देहे कुत्रापि आभरणं नास्ति । नयने भाषा नास्ति । दृष्टिषु आलोडनं

नास्ति ! केवलं प्रतिमा सुलभस्थिरता। ऋषिजनीयः अभिनिवेशः अलसवृषभस्य निश्चिन्तनिषण्णता....

अस्मिन्नवसरे प्रविष्टः आचार्यः सांप्रतिमः। अपश्यत्—आराधनागृ नीलाञ्जना चिन्तामग्ना। अपराः भिक्षुण्यः पुनः पुनः तां पश्यन्ति। तास चित्तवृत्तिः अधीरा भवति। ताश्च असंयता लक्ष्यन्ते। नीलाञ्जनाया सौन्दर्यं तासां प्रवृत्तिं विशृङ्खलयति। ततः मनसि मनाक् विचिन्त नीलाञ्जनामाहूतवान्। नीलाञ्जना झटिति तमुपसृत्य प्रणतवती सस्मितमवदत् सांप्रतिमः—"अञ्जने—! अद्य पूर्णिमादिवसः। अतः दीक्ष ग्रहीतव्या। अन्यथा अनया वेशपरिपाट्या अत्र निवसनं समीचीनं भवेत्" भीता अभूत् नीलाञ्जना। निर्वाक्तया तमपश्यत्।

"तात्पर्यमिदं यत् दीक्षा ग्रहणं श्वेताम्बरधारणं च अत्र प्राथमिकमनु शासनम्। अतः त्वया इदमङ्गीकरणीयम्" "आचार्य ..."!—साश्च निश्वसितवती सा। "अञ्जने ! सौन्दर्यं सिद्धेः प्रतिबन्धकम्। सौन्दर्यमे मार्गतः स्खलयति। अतः देहः विरूपी—कर्तव्यः। उपवासेन च कृशीकर्तव्यः।"

"देहः कृशीकरणीय....? क्लेशः आदरणीयः...??

"हम्, अयमेव निर्वाणस्य मार्गः। निर्वाणमेव धर्मस्य शेषस्वरः।"

"आचार्य ! किमिदं वदति भवान्...?"

"अद्य पूर्णिमा। अद्य दीक्षाग्रहणं श्रेयस्करम्। ततः श्वेतम्बरं परिधा व्रतः आचरणीयः—"

"व्रतः ! उपवासः !!

"तदेव धर्मस्य निदानम्।...ततः एकस्मिन् स्थाने एकाकिनीतय उपविश्य मस्तकस्य समग्रकेशाः निजहस्तेन उत्पाटनीयाः। समस्तमाभर परिहर्तव्यम्। ततः केवलं श्वेताम्बरं परिधाय त्वं श्वेताम्बरी भविष्यसि।"

वचनमिदं श्रुत्वा चकिताऽसीत् नीलाञ्जना। तस्याः समग्रभावन अत्र विपरीता भवति। मनोऽपि नेत्थमिच्छति। किंतु गन्तुं मार्गो नास्ति

आश्रयार्थमाधारो नास्ति । आशामाकाङ्क्षां च संपोष्य यस्य कृते सा अत्र आगता तस्य संधानं न मिलति । परितः दीक्षाध्वनिः। सर्वतो नियन्त्रणम् । नीरवा आसीत् सा ।

"न जानासि, अञ्जने—! असद्वस्तुनः आकर्षणमधिकम् । संसारः असत् । अतः अस्य महतो आकर्षणी शक्तिः । किंतु निर्वाणं सत् । धर्मः सद्वान । अतः अत्र नियन्त्रणम्—बाध्यबाधकता च । संसारस्य भङ्गुररूपं दृष्टं त्वया किन्तु न आकलितम् । पश्य, तव पितुः मातुश्च का दशा अभूत् ? मृतास्ते अद्य किंतु तेषां जीवनकालः दुःखक्लेशादिभिः परिव्याप्त आसीत् । किं ते प्राप्तवन्तः ? अतः संसारस्य असारतां ज्ञातुं श्वेताम्बराः श्वेताम्बर्यः च देशेषु देशान्तरेषु भ्रमन्ति । दुःखस्य वास्तवरूपं जानन्ति । अनेन धर्मप्रचारः भवति । संसारस्य भङ्गुरताऽपि सम्यक् आकल्यते । अतः भिक्षाटनमपि धर्मस्य अपरसोपानम्"—

"किमनेन दुःखस्य निवृत्तिः भवति ?"

'दुखं न कदा निवारयितुं शक्यम् । जीवनं हि दुःखमयम् । सुखेषु दुःखेषु च निर्लिप्तता एव धर्मानुशासनम्"

"तर्हि किमर्थं शरीरक्लेशः ?"

"यौवने शरीरमुद्धत्यं भवति । सौन्दर्यं च विपथयति ।

अत तद्द्वयं परिहरणीयम्'—

"किंतु ...यौवनं सौन्दर्यं च विहाय देहस्य का आवश्यकता·······?"

"देहः जीवने न कदा लक्ष्यं भवितुमर्हति । देहः साधनम् । निर्वाणमेव लक्ष्यम् ।"

"तर्हि भवान् वदति—देहस्य स्तूपोपरि धर्मस्य मन्दिरं निर्माण-यितुम् .... ?" नीलाञ्जनायाः नारीसुलभकोपावस्थामालक्ष्य हतवाक् अभूत् सांप्रतिमः । मार्गान्तरेण वक्तुमारभत ।

"अञ्जने ...? त्वं विदुषीति अनुमोदयामि। धर्मचर्चार्थं नाधुना समय
दीक्षाग्रहणात् परमेव धर्मविषयिणी वाणी मुखे ते शोभिष्यते। त
वैदुष्यमभिनन्दामि। तवादृशेन जनेन विना न कदा धर्मः प्रसरिष्यति
अतः आचार्यस्य अनुरोधं स्वीकृत्य दीक्षां गृहाण"—इति निवेद्य प्रस्थितव
सांप्रतिमः।

"धर्मचर्चा...वैदुष्यं....अभिनन्दनम्....एषु को वा मम सम्बन्ध
कमहमन्वेषयामि एषु ? आत्मानं....? शीलप्रज्ञम्....? अथवा उभयम्...
समस्तसौन्दर्यमवधूय कस्वार्थः प्रेतीभविष्यामि ?

इतः संसारः असारः। ततः निर्वाणं केवलं कल्पना। उभयस्य समन्व
आवश्यकः किन्तु केनोपायेन संभवेत् ?

संसारः कार्यकारण-निबन्धनः। यदि कार्यकारणभावं मनसि नानीयते
यदि वा इदं कार्यं, इदं तस्य कारणमिति न स्वीक्रियते। तर्हि संस
निर्वाणतः न पृथक्।

संसार शून्य इति कथ्यते। तथापि शून्यस्य महत्वं वर्तते। शू
गाणितिकसत्यम्। यद्यपि एकाङ्कतया अस्य मूल्यं नास्ति। तथापि अ
सहस्थितिः एकस्य मूल्यं वर्धयति। यदि इयं गाणितिकशून्यता जीवन
अन्तिमलक्ष्यं भवेत्। तर्हि अस्य सहस्थितिः संसारे एव संभवति। नेयं संस
प्रत्याख्यानमुपदिशति। केवलं संसारविषयकं सत्यसिद्धान्तं नाङ्गीकुरुते।

अतः निर्वाणसंसारयोः समन्वयः केवलं ( संसारे निर्लिप्तता....निर्वा
संयमः ) निर्लिप्ततायाम्....संयमे च संभविष्यति।

एतदर्थं साहस्थ्यमावश्यकम्। स्वीकरणीयमपि। प्रकृतिपुरुष
संगमे निर्लिप्तता संयमश्च केवलशान्तिमानेष्यति। अयमेव विश्वधर्म
इदं च सनातनीयसाहस्थ्यम्।"

इत्थं विचिन्त्य मन्दिरं पुरःसृता नीलाञ्जना....

•

# १२

वायुः यायावरः....

पादपच्छायातले श्रान्ता सन्यासिनी । देहे धवलवसनम् । आकृतिः पुरुषतः न पृथक् । मुण्डितं मस्तकम् । केशा उत्पाटिता इति सम्यक् लक्ष्यते । निस्वप्नमानसा श्वेताम्बरी । तन्द्रा सामान्यतया तामाक्रमते । चलोर्मिमलयः तस्याः स्वेदान् अपनयति । वृक्षस्य मूले पृष्ठं तस्याः संलग्नम् । सा निमीलितनयना....मध्याह्नकालः बकुलवृक्षे कोकिलामनुकरोति—

इतः कश्चित् श्मश्रुलः अभ्यागच्छति । मस्तककेशाः धूलि-धौताः । चरणे वृषभस्य गतिः । वेशः साधारणः । क्लान्तिर्नास्ति । सम्भावना नास्ति । भावियोजनाऽपि न वर्त्तते । केवलं संचरति, आहिण्डते, अनुसंधत्ते—

सहसा निजसदृशं जनं विलोक्य सः विस्मितः । निकटं गत्वा अपश्यत्— तन्द्रायते । शनैः तमुत्थापितवान्—'सन्यासिन्....!"

शब्दं निशम्य व्यग्राऽभूत् नीलाञ्जना । नयनमुन्मोच्य कियत् कालं तं सा अपश्यत् । कण्ठस्तस्याः शोकगद्गदः अभूत् । नीरवा आसीत् सा—

"युवजीन ..! कुत आगतवान् ?

"सांप्रतिमस्य आश्रमतः"—

श्मश्रुलः शीलप्रज्ञः मनाक् व्यथितः । मुखात् विनोदरेखा तस्य मलिना अभवत् ।

"किमभवत् ? सन्यासिन्....!" उन्मनीभवति नीलाञ्जना ।

"नहि, युवजीन ! वक्तुं न शक्यते । अनिर्वचनीया सा स्मृति...."

"स्मृति....! कीदृशी स्मृतिः ?"

',तत्रैव सा स्मृतिः निपतिता मम। तस्याः अपि दर्शनं लब्धमद्यावधि....।"

"कस्याः वार्तां करोति भवान् ?"

"वक्तुं प्रभवसि ? वक्तुं प्रभवसि, युवजीन....! ?

नीलाञ्जना नाम्नी एका बलिका कदा दृष्टा त्वया ?

कदा वा तत्करतः भिक्षा गृहीता....?"

"नीलाञ्जना....नी-ला—ञ्ज ना....आ"....व्यथते सा।

नेत्रं तस्याः उत्पयीभवति।

"व्यथसे''''? व्यथसे त्वं, युवजीन....! जानासि ? किं जानासि ताम्"

हँ''''हँ''''आः" बाष्वरुद्धा अभूत् सा।

"कथं त्वं बाष्पाभिभूतः, युवजीन....। किम्...., किं त्वं त

प्रणयवान्....!"

"नहि, नहि...., सन्यासिन् !"

"अथवा, तव प्रतिस्पर्धी इति मां चिन्तयसि....?"

"नहि...., नहि, सन्यासिन् ! अन्यत् चिन्तयामि।"

"किं तर्हि ..., तस्याः विषये ज्ञातुं मम परिचयः आवश्यकः ?"

"हँ....हँ..., तदेव इच्छामि"

सः दु खातिशयेन आरभत—

"युवजीन ..! असमये तस्मिन् दिने...., रुग्णरूपेण तस्या आतिथ्य मङ्गीकृतं मया। ततः...तस्याः स्पर्शः मे जीवनं दत्तवान्। तदाऽहमासम् शीलप्रज्ञः। सा आसीत् चपला किशोरी...नीलाञ्जना। आनितम्बकेश आकृत्या वामनी। मृदुवचनतोषिणी। आः....सुशीला सा....।

तस्यामतीव प्रणयवान् अभूवम् तदाप्रभृति। न जाने...सा चिन्वितवती। तथापि सा अनुरक्ता इति स्पष्टं लक्षितं मया।....त

मानसिकीं पूरणाय अहमद्य श्वेताम्बरः। श्वेताम्बरीयज्वाला अद्यापि न शाम्यति।

जाने नाहं इयं तस्या इच्छा आसीद् वा ? पश्य....

पश्य, युवजीन....! वक्षसि मे ज्वालाचिह्नम्"

सा तु शोकाकुला सती निरुत्तरा आसीत्। शीलप्रज्ञः तस्याः मुखं निरैक्षत—

"क्रन्दसि.....!, क्रन्दसि, युवजीन....! ? सकृत् कथय ते अन्तरम्। किं वा जानासि तस्याः विषये" —

"सा एव भ्रमति भवदर्थम्"—

"भ्रमति....? ?"

"तस्याः पितरौ दिवंगतौ। असहायिनी वराकी भवन्तमन्विष्य सांप्रतिमस्य आश्रममागतवती। ततः भिक्षाटनं कृत्वा इतस्ततः संचरति।

"युवजीन..!!" इति विचलितः शीलप्रज्ञः तस्या हस्तमधरत्। नीलाञ्जना तु अतिव्यथिता आसीत्। अपूर्वोऽयं स्पर्शः। बहुदिनात् परमद्य देहः पुनः कम्पते। बाष्पकुलिता केवलमुच्चैः निश्वसिति। तथापि निजपरिचयं न ददाति।

अन्यथा चिन्तयति। शीलप्रज्ञः तस्याः सौन्दर्यार्थं उन्माद इति अनुभवति। किन्तु सा विपरिणता इति स्वयं मध्यते। शीलप्रज्ञः प्रगल्भभावेन कथयन् अनुवर्त्तते—

"युवजीन....! त्वमपि दूयसे तस्याः कृते ? सा किं तव आत्मीया ? अथवा बाल्यपरिचिता बान्धवी ? किं वा केवलसंपर्कीया—?"

"नहि, सन्यासिन्! अहं जैनः। जितेन्द्रियः। मम इन्द्रियकामना नास्ति। तथापि न जाने कथं तस्याः सौन्दर्यं व्यहारश्च मां प्रभावयति। किमर्थं च तस्याः दुर्दशामवलोक्य नितरां दुनोमि।"

"युवजीन........!"

"सन्यासिन्"—

"युवजीन........।" इति पुनः पुनः आवृत्य तस्याः हस्त निजहस्तोपरि निधाय मर्दयन् आसीत् शीलप्रज्ञः।

"सन्यासिन्.. सन्यासिन्"....इति च सा मथ्यमानाऽसीत्

"युवजीन! तस्याः समीपं मां नेतुं शक्नोषि?"

"सा भवतः निकटे अस्ति, सन्यासिन्........!"

"निकटे... ? नीलाञ्जना....निकटे ?? सा किमिच्छति वक्तुं प्रभवसि, युवजीन....? वक्तुं पारयसि ?"

"सा केवलं वदति—शीलप्रज्ञः श्रेष्ठी। सा च तस्य सहधर्मिणी। श्रेष्ठिपत्नीरूपेण चिराय निवस्तुमिच्छति सा"—अक्रन्दत् नीलाञ्जना।

"युवजीन...! अहं तदेव इच्छामि। आनितम्बकुन्तला सा साक्षात् देवी। व्यवहारकुशला। जीवनाथं जीवनायनी। अमितसुन्दरी। युवजीन...! त्वया सा दृष्टा? किमधिकं वर्णयामि? शान्तिशुश्रूषानिमित्तं सा एका स्वर्गीय-निर्झरिणी। धर्मसाधनार्थं एक एव मार्गः तस्याः संयत-वृत्तिः।......युवजीन! तवाकृतिं दृष्ट्वा विश्वासो मे त्वयि द्रढायान् संजातः। नूनं त्वमिदं कर्तुं प्रभवसि—सकृदेव मां संगमय"........

सन्यासिन्! तर्हि त्वमतीव व्याकुलः?"

"ज्ञातुं न प्रभवसि, युवजीन? मनसि मे कियान् स्मृतिभारः? हृदये वा कीदृशी विरहः? किमर्थमिदं निर्वासनम्? केन प्रकारेण वा बोधयामि—इत्थं विधुरोऽहम्? पश्य....पश्य मे वक्षसि कीदृशो ज्वालामयः अशुष्कोऽयं दाक्षायाः संकेतः...." दुःखेन स्वरस्तस्य अवनमितोऽभवत्। तस्यावस्थां च अवलोक्य कातरा आसीत् नीलाञ्जना। स्वयमपि असंयता अभूत् अधिकं विलम्बितुं नाशकत्। केवलमाश्वासनवचनेन अवदत्।

"सन्यासिन्....! यथासाध्यं तां भवन्निकटे प्रापयिष्यामि। मयि विश्वसितु भवान्।"

नीलाञ्जना अभिवादयितुमुद्यता ।

सहसा तस्याः करद्वयं निजीकृत्य शीलप्रज्ञः अन्वनयत् ।

'युवजीन ...! अहमद्यप्रभृति त्वां प्रतिपालयामि ।'

वाष्पाकुला नीलाञ्जना निजपथमारूढ़ा । मनसः समस्तवेदना अश्रुरूपेण निर्गता । तस्या मार्गम् एकाग्रतया पश्यन् आसीत् शीलप्रज्ञः । यदा सा दृष्टेरन्तर्हिता तदा सहसा अस्य मनसि प्रश्नः समभूत्—"कोऽयमासीत्....? निजदुःखेन सह निजपरिचयोऽपि मया दत्तः । परं तस्य परिचयनिमित्तं विस्मृतवान् । नाऽहं किमपि पृष्ठवान् । न वा स निजविषये किंचित् उक्तवान् । तस्य मुखं परिचितमिव । तस्य वचनं श्रुतपूर्वमिव । तस्य च व्यवहारः अनुभूत इव । तस्य च स्पर्शः उपभुक्त इव । कोऽयं सः ? नीलाञ्जनायाः भ्राता....? नहि, तस्या भ्राता नासीत् । अथवा स्वयं सा ? सैव छद्मवेशिनी....? मन्निमित्तं सन्न्यासिनी...?" व्याकुलोऽभूत् शीलप्रज्ञः । इतस्ततो धावन् आकारितवान् 'युवजीन....! युवजीन....! प्रतीक्षस्व.... युवजीन....?

सा तु अन्तर्हिता आसीत् । शीलप्रज्ञस्य चीत्कारं श्रुत्वा पक्षिणः वृक्षात् उड्डीयमाना आसन् ।

•

# १३

"प्रकाशे न किमपि मृग्यते। तमसि तु सर्वम् अन्विष्यते। अहमद्य निरतमन्वेषयामि। अहमपि पूर्णतमसि। अपि च अन्धकारे वस्तु न लभ्यते। यदि लभ्यते तत् सम्यक् परिचेतुं न शक्यते। एतदर्थं प्रकाशो गवेषणीयः। ततः सर्वं विज्ञातं भवेत्।" स्थिरचित्तेन स्वयमभिलपति नीलाञ्जना।

परितः शीतलप्रहरशान्तता। नीलाञ्जना विहरति कल्पनाया उदासच्छायासु। अनुभवमाकलयति सा—'शीलप्रज्ञः तामेव नीलाञ्जनामिच्छति, या रूपवती, बुद्धिमती, असामान्य—शीलसंपन्ना च। इयं नीलाञ्जना न तस्य अभीष्टा। अतः निकटवर्त्तिनीमपि न परिचितवान्। इयं नीलाञ्जना निजपरिचयमगूहत्। यतः शीलप्रज्ञः श्रेष्ठिरूपेण न तत्र आसीत्। श्रेष्ठिसुलभसौन्दर्यं साहसिकता च तस्मिन् नासीत्। भीरुत्वेन, कापुरुषरूपेण इतस्ततः संचरन् आसीत्। तथापि अन्तर्ज्वाला....तथापि परिखेदः...। सामान्यसंपर्के तु इयत् ज्वलनम्। ये संसारिणः तेषां कियद् वा ज्वलनं न स्यात्? संसारः ज्वलनधर्मा। संसारिणां कृते ज्वलने आनन्दो मिलति। संसारारम्भिणां तु ज्वलनं मधुमयम्"....गम्भीरा आसीत् श्वेताम्बरी नीलाञ्जना। धर्मस्य प्रभावः यथेष्टः अद्यत्वे तदुपरि।

...."शीलप्रज्ञः अधुनाऽपि संसारारम्भी। ज्वालां च अभिनन्दति। मदर्थं....मदर्थमेव ज्वलति, ज्वलितुमभिलषति च। मत्कृते पुनः सः अस्मिन् संसारे भस्मीभविष्यति। तस्य दिव्यसत्ता निह्नुता भविष्यति।

सः अधुना आलोके वर्तते। मयि संगम्य अन्धीभविष्यति। वासनामयं भविष्यति तस्य शरीरम्। दिव्यमैथुनं न संभविष्यति।....न कदा तं

भस्मीभवितुं दास्यामि। अहं तस्य मङ्गलं कामये। अहं नारी.... चिरहिताकाङ्क्षिणी....."

संयमस्य जतुगृहे व्यथा तस्याः उपशान्ता। प्रवृत्तेः विश्रृङ्खलता अवनता। आराधनासु तस्याः साधना पूता अभूत्। प्रार्थनासु दिवसाः त्वरिताः—

...."तदा भगवन्!

शक्ति देहि....शक्ति देहि....शक्ति देहि....

अदृश्ये किंचित् द्रष्टुम्।

समुचितसमये....

समुचितं वक्तुम्

कर्तुमपि....।"

प्रतीक्षासु समयः समुद्रितः। तथापि न युवजीनः प्रत्यावृत्तः।श्रेष्ठिमनोवृत्ति संपोष्य देशात् देशान्तरं भ्रमति शीलप्रज्ञः। धनानि संगृह्णाति। कदा क्वचित् नीलाञ्जनायाः स्मृतिः तमुदासयति। कदा च प्रतिरुणद्धि। तथापि सः सर्वमुपेक्ष्य भ्रमति। कालक्रमेण च देशेषु देशान्तरेषु जनप्रियो भवति।

जनान् उपकरोति ? कदा यदि रुग्णान् सेवते। कदा दरिद्राय धनं ददाति। कदा यदि कुत्र महोत्सवमायोयजति। कदा कुत्र वस्त्राणि वितरति। कदा च वृद्धसभायां प्रवचनं करोति। कदा च शिशुभिः सह आमोदते। इत्थं यथा वितरति। तथा संगृह्णाति। धनिकान् अनुनयति। मध्यवित्तान् अनुशास्ति। दरिद्रान् प्रोत्साहयति।

अद्य महोत्सवः। बहवः समागताः सभा अयोजिता। सभाया अतिथिः शीलप्रज्ञः। सर्वे तटस्थाः। शीलप्रज्ञः नूतनः श्रमणः। महान् उपकारी। जनसेवकः। अद्य सः भाषिष्यते इति सर्वत्र प्रमोदः। यदा शीलप्रज्ञः सभासनमलंकृतवान् तदा करतालध्वनिभिः परिसरः मुखरितः अभूत्। यथारोति यदा एकशिशुः पुष्पमाल्यं समर्पयितुमुद्यतः तदा सः तस्य हस्तात् मालामानीय तमेव परिधापितवान्। पुनः करतालध्वनिभिः परिवेशः कम्पितः। शीलप्रज्ञः उपविष्टोऽभूत्। अनुरोधानुसारं स्मितमुखेन स आरभत–

"आत्मीयाः....!

जीवनं मधुमयम्। किं तु पवित्रजीवनयापने एव मधु मिलति। पश्यन्तु....शिशुः इच्छति खेलनाम्। किशोर इच्छति क्रीडार्थम् अवसरम्। युवा इच्छति अभिरूपाम्। युवती इच्छति अनुरूपम्। बन्धुः इच्छति हृदयस्य हासम्। प्रेमिक इच्छति अधरे मनाक् स्मितम्। वृद्ध इच्छति

उपनेत्रम् । वृद्धा इच्छति सहाययष्टिकाम् । क्षुधार्त्तं इच्छति मुष्टिमितमन्नम् । पिपासुः इच्छति बिन्दुमितं जलम् । वासशून्य इच्छति एकपादमितभूमिम् । वन्दी इच्छति मुक्तमलयम् ।

कृषक इच्छति उत्पादितस्य मूल्यम् । श्रमिक इच्छति पारिश्रमिकम् । शिक्षक इच्छति नमस्कारमेकम् । सर्वकार इच्छति करम् । सर्वोपरि व्यक्तिः इच्छति निरापत्ताम् । स्वमतपोषणाय च अधिकारम् । एतत् सर्वं साधयितुं धर्मः वाञ्छति श्रृङ्खलितजीवनयापनम् । धर्मः अनुशास्ति सहस्थताम् । अभिकांक्षते च समात्मीयताम् । पोषयति समन्वयम् । अतः साहस्थ्यमेव जीवनस्य मधु । यतः मनुष्यः जन्मतः सहस्थः......."

करतालध्वनिषु उत्साहितः शीलप्रज्ञः सिद्धान्तमुपनयति—"आत्मीयाः .......!

अस्मत्कृते वर्त्तते—प्रचुरा पृथिवी । असीम आकाशः । निःशेषज्योतिः । पुष्कलस्वप्नः । सर्वमेतत् आयत्तीकर्तुं अपेक्ष्यते—प्राणप्राचुर्यम् । ....विकसितं मनः । ....अखण्डप्रीतिः । ....विशालहृदयम् । ....अदम्या आत्मीयता ।

आत्मीयाः....! अयं धर्मः सनातनः । चिरस्थायी । समयो विवर्त्तते । मनः परिवर्तते । देहः नश्यति ।

किन्तु सहस्थता हस्तान्तरीभवति । उत्तरवंशीया तामेव अनुवर्त्तयन्ति"—

समतानिकजयध्वनिषु शीलप्रज्ञः प्रसन्न आसीत् । आयोजकः तस्य यथाप्रस्थानमायोजयत् । सभामुद्याप्य शीलप्रज्ञः आशीर्वादं व्यतरत् । हृष्टमनाः आयोजकान् समाश्वस्य प्रशंस्य च देशान्तरं प्रस्थितः ।

—दिवसः त्वरते ।

शीलप्रज्ञः प्रनिष्ठने ...प्रतिष्ठते....द्वारं द्वारं च उपैति । वैयक्तिकप्रभाव-मातनोति । क्लान्तिर्नास्ति । अतृप्तिः नास्ति । मनसि केवलं निर्माण-योजना। चिन्ता व्यक्तेः महत्ता विषये—निर्माणेषु, आविष्कारेषु, उद्भावनेषु, नवचेतनासु, अभिनवकल्पनासु, नवीनपद्धतिषु एव व्यक्तेः उत्कर्षः। न ध्वंसचिन्तासु न वा ध्वंसोन्मुखकार्यकलापेषु। .......शिथिलता अपि उन्नतेः न माङ्गलिकी। यथाकथंचित् समयस्य सदुपयोगः एव काम्यः। अयमेव आदर्शः। अयमपवर्गः। एतदर्थमात्मबलः आवश्यकः—

चतुःपार्श्वे सहस्थवार्ता....

•

—अतिक्रान्तम्....वयः....

सांप्रतिम उदासीनः उपविश्य आत्मानमनुशीलयति—वयः निह्नूयते। कामना न तथापि ह्रीयते। सदा प्रतिपत्तेः चिन्ता। पौरुषाय लोलुपता। धर्मपरिचालानार्थं मोहः। धर्माधिकारस्य अहमिका। एकाङ्कशासको भवितुं प्रचण्डप्रवृत्तिः। निरतं लोकैषणा। एतत् सर्वं क्रमशः वर्धते।

....नीलाञ्जना सुमती। वचोऽनुसारं सर्वं त्यक्तवती। आभरणं दीक्षानिलये निपतितम्। तस्याः रौप्यनूपुरं किन्तु यत्नेन संचितम्। रौप्यनूपुरं परिधाप्य यदा सा आगच्छति तदा यस्य कस्याऽपि मनः प्रीणयितुं शक्नोति। एतदर्थं सांप्रतिमस्य दुर्बलता प्रथमतः। अतः नूपुरं सयत्नं रक्षितम्।

अद्य किन्तु सा उपासिका। निरतमुपासते। आभरणाय लोभो नास्ति। यौवनार्थमनुचिन्ता नास्ति। सौन्दर्यकृते भ्रूक्षेपो नास्ति। एतादृक् परिवर्तनार्थं आत्मदैन्यमपि नास्ति। केवलमुपासना....साधना ....आराधना। सनातनीयप्रतिमा सा महावीरस्य द्वितीयसंस्कृतिः।

तपोवनस्य पादपाः निरुद्धताः। निरुन्नतकाकलिश्च औदासीन्यं जनयति। शनैः अपह्नूयते मानसिकविक्षिप्तता। सांप्रतिमः पश्यति वकुलपादपम्। सहसा एकमालोडनं विद्युत्रेखा इव हृदये विलीनमभूत्—पादपः उत्सर्गाशया अवनतः। आत्मसमर्पणं च तस्य धर्मः। आश्रयदानाय च तस्य अपूर्वमौनता। छायाप्रसाराय च अकुण्ठप्रीतिः। फलवितरणाय स्वतः प्रवृत्तिः। तथा वयमेतत् न जानीमहे। को वा आनन्दो वर्तते अस्माकं तदुपरि लोष्ट्रक्षेपणे ? को वा लाभः तस्य रक्ताक्तीकरणे ?

तस्य व्यथा किमस्माभिः आकल्यते ? तस्य अस्थि, चर्म, रक्तं— सर्वमस्माभिः उपयुज्यते। अस्माकं कृते एव तस्य निर्मितिरिति किं ज्ञायते अस्माभिः ? तस्य शाखा प्रशाखा च अस्माकं सेवार्थं प्रस्तुता इत्येव तस्य पर्याप्तिः। तथापि आस्माकं वस्तुवादिमनः केवलं तस्य क्षतिं विक्षतिं च इच्छति—

—ततः नीलाञ्जनां मनागवलोकितवान् सांप्रतिमः। ध्यानस्था आसीत् श्वेताम्बरी। पादपीयमौनता तामात्मस्थीकुर्वाणा आसीत्।

वकुलमूले नित्यकर्म कुर्वाण आसीत् कुक्कुरः। ततः....तत्प्रदेशमाघ्राय स प्रयातः। सांप्रतिमः तमेव दृष्ट्वा हसन् आसीत्—इमे एव मुक्ताः। ज्ञानहीना अपि न दुःखिताः। ज्ञानवान् तु सदादुःखी। ज्ञानस्य सुपरिणतिं यथा सः नाश्नुते तथा कुपरिणतेः बिभेति। निरतमनुशोचयति। दुःखप्रत्याशया च स्वयं संतप्यते। दुःखं ज्ञानार्जनम्। दुरपनेया अपि कुपरिणतिः अस्य! ज्ञानवान् जीवः तमसः निर्गत इति आत्मानं बहुमन्यते। अतः उपभोगे निमग्नः। न जानाति अयम्—प्रकाशोऽयं ज्योत्स्नाजालम्। यस्य सूत्रं धारयति तमसा। सा प्रतिदिनं सूत्रमिदमाकृषति। जालमपि संकुच्यते। पुनश्च जीवोऽयं तमोभुक्तो भवति—

सांप्रतिममनसि इत्थमनेकःरमणीयरोमन्थः।

—दृष्टिं न्यवर्तयत् सः—

दिवा अद्य अप्रकृतिस्थः। किंचिदपि न रोचते। भावनाः असंबद्धाः। प्रतीक्षाकुलित इव अनुभूयते। उपचारं कामयते चञ्चलता। सांप्रतिमः अपश्यत्—श्वेताम्बरी उपविष्टा। ध्यानमुद्रा तां वृद्धापयति। नीलाञ्जना जरती दृश्यते। देहात् तस्याः लावण्यं विलुप्यते। मांसाश्च क्षीयन्ते। मुण्डितमस्तकं भयङ्करं दृश्यते। तत्राऽपि श्वेतकेशप्ररोह एकमेकं स्पष्टो भवति।

किंचिद्वक्तुमभिलष्य तामुपगतवान् सांप्रतिमः। धीरस्वरेण आहूतवान् "अञ्जने"....

तस्य ध्वनिः नीलाञ्जनायाः ध्यानमुद्रासु निह्नुतः। स्थिरप्रतिमा निर्वेदा आसीत्।

—प्रत्यागतः सांप्रतिमः—

बालिका नीलाञ्जना–उपासिका अञ्जना–अनयोरद्य महत्पार्थक्यम्। तद्दिनस्य चपलता, अद्य च स्थिरता—एतयोः दैर्घ्यमपि निरायत्तम्। महत् परिवर्तनं संजातम्। देहः पथच्युतः। सौन्दर्यमपि पराजितम्। प्रवृत्तिः श्रृङ्खलिता। संयमः अध्यारोपितः। धर्मस्य उद्देश्यमपि सिद्धम्। किमतः परम्?

यन्त्रणा....? मृत्यु...? पुनर्जन्म....अथवा निर्वाणम्? किमिष्यते? किमर्थमयं प्रयत्नः?....

संसारधारा सर्वान् प्रवञ्चितवती। संसारनिकटे च सर्वे पराजिताः। संयमी, योगी, सन्यासी प्रकृतिमपवर्ण्य अन्ततो हारिताः। प्रकृतिरपि कृतिमतां प्रश्रयते। इमामवरोद्धुं न समर्था विशेषज्ञाः। कृत्रिमतामतः प्रकृतित्वेनाऽपि स्वीकुर्वन्ति ते। केवलप्रकृतिमवलम्बमानः जीवः न कदा सुखीभविष्यति। अतः संसारस्य कृत्रिमस्पर्शः जीवनं नियमति। जीवश्च आत्मानं कृत्रिमयितुं सततं यतमानः—

क्षणिकसिद्धान्तसेतुः कृत्रिमप्रवाहं नावरोद्धुं शक्नोति धर्मोऽपि प्रवाहेऽस्मिन् दूरमपैष्यति....

—सांप्रतिमः आत्मकृतिं प्रति मनाक् विमुखः—

"धर्मः केवलं निजाधिकारमन्योपरि न्यस्यति। निजरूपं च प्रसारयति।...इयमद्य नीलाञ्जना धर्मस्य अभिसारिका। किं तु अस्याः कृते किं कृतं धर्मेण? जन्मतः अस्या वर्धननिमित्तं यतितम्? अस्याः उन्नतये सहायितम्? अस्याः जीवनविषये चिन्तितं सकृत्? तर्हि किमर्थं अधिकारं न्यस्यति? अधिकारं न्यस्यति यतः अनेकानामनुमतमिति? अधिकारं न्यस्यति यतोऽयं क्षमतासीन इति? तर्हि जीवनस्य स्वातन्त्र्यं कुत्र?

सांप्रतिमः उन्मनस्क आसीत्। नीलाञ्जनायाः क्षीयमाणं लावण्यं, अपगम्यमानं च सौन्दर्यं तेन सविषादम् अन्तर्दृष्टीकृतमासीत्।

स्नेहशीलम्....मध्याह्नम्....

आश्रमपथे दृष्टिचारणं करोति सांप्रतिमः। शनैः नेत्रपथमागता अस्पष्ट-व्यक्तिः। क्रमात् केशिक इति स प्रद्योतितः। ततः श्मश्रुल इति निर्धारितः। धवलवसनेन शोभते सः भद्रः किन्तु न श्वेताम्बरः, न योगी, न ब्रह्मचारी, न वा वानप्रस्थी। केवलं भद्रजनः। तस्य पदक्षेपेषु योगक्षेमस्य अभिलेपः। चलनरीतिषु दृढता। परिच्छदे शान्तिवार्ता। मुखे अहिंसप्रसन्नता। भावनासु उच्चाटिता रतिजयन्ती। लक्ष्यं मैत्री जैत्री च।

निरीक्षते सांप्रतिमः। परिचेतुं न शक्नोति। यथायथं द्रष्टुं चेष्टते। किन्तु केवलमाविष्करोति तस्य केशेषु श्मश्रुषु च कति श्वेतकेशान्। भद्रः निकटायितः। सांप्रतिमः स्थिर आसीत्।

धीरोत्तलितकण्ठेन अवोचत्—

"आशीर्वदामि, भद्र !"

"अनुगृहीतोऽस्मि !"

"तव परिचयः ?"

"परिचयः अतीतः"

"अतीते न कोऽपि जीवति, भद्र !। अतीतस्य स्मृतिषु जीवो जीवति।"

"परमहमतीतस्य आश्वस्तिषु जीवामि, न स्मृतिषु।" भद्रस्य अभिव्यक्तिषु आश्चर्यान्वित आसीत् साप्रतिमः। निजाभिमानं मनाक् अपनीय पुनः पृष्टवान्—

"तर्हि तव नाम ?"

"नाम आरोपितम्। वस्तुनः नाम्ना सह न कोऽपि सम्बन्धः न कदा नाम पूर्णतया पदार्थमभिधातुं शक्नोति। पदार्थस्तु वास्तवः। नाम काल्पनिकम्।"

'कस्त्वमिति मम प्रश्नः ?'

'यं भवान् पश्यति, स एव अहम्। वस्तुसत्तामेव भवान् प्रत्यक्षीकरोतु। वस्तुगोचरता एव वस्तुनः प्रत्यक्षपरिचयः।'

मुग्ध आसीत् संप्रतिमः अर्धवृद्धोऽयं भद्रः। वाणीषु प्रज्ञा साक्षात्-स्वरूपिणी। इत्थं विचिन्त्य पुनः सः जिज्ञासितवान्—

'आगमनस्य तात्पर्यम् ?'

'भवतो धर्मविषये किमपि ज्ञातुम्'—

'एतदर्थं शिष्यत्वमङ्गीकर्तव्यम्।'

'अन्यथा न सम्भविष्यति ?'

'नहि, जले अनवगाह्य, जलस्कशीतलता सम्यक् परीक्षितुं न शक्यते'—

"धर्मार्थं तु प्रथमतः जिज्ञासा अपेक्ष्यते। ततः तस्मिन् अवगाहनम्। किन्तु भवान् विवरीतं वदति—

प्रथमतः अवगाहनम्। ततः जिज्ञासा"....

"शिष्यत्वाङ्गीकार एव अत्र प्रथमतः धर्मप्रवेशः। एतदेव प्रथमानु-शासनम्।"

"दीक्षाग्रहणं तर्हि अनिवार्यम्।"

"नूनम्—"

'पश्यतु भवान्—अनिवार्यता न कदापि सत्यमाविर्ष्कतुं समर्था भवति। दुःखदायिनी हि अनिवार्यता।'

'धर्मः सत्यस्य प्रतिभूः। धर्म एव सत्यस्य सर्वशेषस्वरः। तत्र निमज्य सत्यमाहर्तव्यम्। अन्यथा कथं वा संभवम्? संसारी तु सदा दुःखी। संसारश्च विषादायकः अतः संसारे स्थित्वा धर्मस्य महत्त्वं कथं वा अवधार्येत ?'

"संसारे न निमज्य संसारी दुःखी अथवा संसारो दुःखमय इति कथं वा प्रमाणीकर्तुं शक्यते ? भवान् तु न संसारी। संसारविषयिणी दुःखानुभूतिः कुत आगता भवतः ?"

"संसारो दुःखमय इति परम्परासिद्धान्तः। पूर्वजस्य प्रत्यक्षा अनुभूतिश्च। संसारः तमसा। निर्वाणं च मिहिरमरीचिः। इयमपि मम अभिज्ञा। परीक्षिता च तर्कणा...।"

"किन्तु ..., आचार्य ...! एकस्य अनुभवः अन्यार्थं न सत्यं भवति। एकस्य प्रवृत्तिः हि अन्यतो भिन्ना। अतः एकस्य प्रवृत्तिः अपरस्य अनुभवं न कदा अपेक्षते। अपरं च, भवत्कृते यत् यथार्थं अपरार्थं तन्न सम्भवेत्।"

"तथापि मनुष्यो नियमावशः।

"युक्तमनुभूतं भवद्भिः। किन्तु नियमस्य सीमा वर्तते। अतः सर्वविधनियमस्य पालनं न सम्भवम्। सर्वविधसाहसिकताकृते न कदा पारितोषिकं लभ्यते। न वा सर्वविधदुर्बलतानिमित्तं क्षमा माप्तुं शक्यते"—

"कस्त्वं भद्रः ? किमर्थं ते अस्य धर्मस्य विरुद्धाचरणम् ? जानासि, कस्य सम्मुखे जल्पसि ? अहं धर्मगुरुः। धर्मानुशासनस्य श्रेष्ठसाक्षी। अहं निर्लिप्तः—त्यागी—निर्वाणमुखी"....चीत्कर्तुं यतमान आसीत् सांप्रतिमः। क्षीणहासमुद्भाव्य भद्रः प्रारभत।

"भवान् त्यागी। सतः न्यास एव भवत्पक्षे युक्तियुक्तः। किन्तु कथमाधिपत्यमोहः ? किमर्थं दम्भः ? कथं च दीक्षार्थं बलात्कारः ? पश्यतु उच्छृंखलं दमयितुं बलात्कार आवश्यकः। साधारणस्य कृते का अस्य आवश्यकता ? साधारण इच्छति स्नेहम्—उत्साहम्—करुणाम्। बलात्कारः न कदा हृदयं जेष्यति। न वा शान्ति जनयिष्यति।"

स्थिरस्तम्भितः सांप्रतिमः। भद्रस्य स्वरं परिचिन्वान आसीत्। इव गुहातः निर्गता प्रतनुप्रतिमा श्वेताम्बरी। निःस्पृहा दृष्टिः। निर्वेदा गतिः मन्दः वेगः। अधरे च प्रतनुस्मितम्। उपगता निश्चञ्चलतया।

सांप्रतिमः तां प्रेक्षमाण आसीत् ।

भद्रः सकृत् सांप्रतिमं, सकृत् च श्वेताम्बरीं विलोकयति। अद्भूतं हृदयकम्पमनुभवति । ज्ञातुं न शक्नोति—श्वेताम्बरीं दृष्ट्वा कथं स्वस्मिन् व्यामोहः जायते। कथं च शक्तिः अपक्षीयते। किमर्थं धैर्यं नायाति। मुखे तस्य कति कातररेखाः प्रादुर्भवन्ति।

श्वेताम्बरी तं निरीक्षते—केशेषु श्मश्रुषु च अस्पष्टधवलिमा। भाले जरोपगमस्य रैखिक आभासः। नयने मौनतृष्णा। अधरे अप्राप्तेः शुष्कता। साधुवेशः। चरणे किंतु आग्रहशीला धमनी उन्नता। श्रद्धान्विता तथापि परिपाटी—

भद्रः पश्यति—सम्मुखे कृशाकृतिः। गण्डस्थले अकालवार्धक्यम्। नयनकोणे मलिनता। मुण्डितमुण्डे केशप्ररोहेषु प्रेतविभा। पूर्वपरिचिता इव अनुभूयते। तथापि प्रष्टुं न पारयति । साहसं यथाकथंचित् संगृह्य अपृच्छत्—

"त्वं....त्वं....स एव युवजीनः ?"

"नहि, न युवजीनः—अपि तु नीलाञ्जना"—क्षणाय अधरे तस्याः स्मितमुद्भूय अपगतम्।

"नीलाञ्जना....!! नीलाञ्जना....!!" चकितनेत्रं तस्य तस्यां संलग्नमासीत्। तथापि शुष्ककण्ठे अक्षरचतुष्टयं सः आवर्तयन् आसीत्।

"आत्मदैन्यं अग्रेगतस्य प्रतिबन्धकम्, शीलप्रज्ञ !" सांप्रतिमः नामेदं श्रुत्वा तटस्थ आसीत्।

शीलप्रज्ञस्य मनसि भासमाना अभूत्—नीलाञ्जनायाः प्रारम्भिक यौनच्छविः। अर्धशेषमार्गः। खर्जूरच्छाया। अवन्ध्यसंध्या च।

"अञ्जने....! त्वमत्र....?"

"हुँ, इयमपरा मानसिकी—"

"अञ्जने....! त्वत्कृते...."

"तिष्ठतु वक्तव्यम् । ज्ञातं सर्वम् । आगमनस्य कारणमपि अवगतम् ।"

"अधुनाऽपि समयो वर्त्तते, अञ्जने ?"

"न लज्जसे वक्तुम् ? यस्य कर्तव्यज्ञानं नास्ति । यस्य भारवहनस्य सामर्थ्यं नास्ति । यस्य पुरः पश्चात् विचारो नास्ति । यस्य धैर्यं नास्ति । स्वयं प्रज्ञा नास्ति । यश्च जीवनविषये अनभिज्ञः ! आत्मीयतां न जनाति । सः पुनः संसारारम्भी ?"

"त्रुटितं मया । क्षमस्व मां— अञ्जने....?"

"हृदयवतीनिकटे प्रणयप्रार्थना सफला भवति, शीलप्रज्ञ ? न आश्रमस्य प्रेताकृति निकटे...."

तस्याः दृढस्वरमनुरणयन् आसीत् शीलप्रज्ञः । वैक्लवाश्रितः सः अनुतप्तः । नीलाञ्जनायाः अन्वेषणं न कृतं सम्यक् तेन । यस्मिन् समये अन्वेष्टव्यं आसीत् तदा उदासीन आसीत् । भिन्नमनोवृत्ति संपोष्य अभिमानेन भ्रान्तम् ? धर्मान्तरचिन्तनमादृतम् । लोकैषणा च अङ्गीकृता । एतदर्थमद्य अवमानना । जीवनस्य विपरीतगतिश्च । अधोमुख शीलप्रज्ञः ।

"शीलप्रज्ञ ! स्त्री पौरुषमिच्छति । न पुरुषस्य दौर्बल्यम् । न आत्मसमर्पणम् ! न वा चाटुमिश्रहीनसंकल्पम् । न वा तस्य कातरप्रवृत्तिम् ।"

"अञ्जने ! बहु विमानितम् । किन्तु न जानासि त्वम्—परिस्थितिः, परिवेशः, समयश्च जीवनं नियमयन्ति ।"

"जाने सर्वं । तथापि कर्त्तव्यं कर्त्तव्यमेव । हीनसंकल्प एव कर्त्तव्यं विस्मरति । छलनां प्रश्रयते । मुक्तये च मार्गान्तरं अन्वेषयति । किं वा अधिकं वच्मि ?"

"अञ्जने....! !" साश्चर्यं पश्यति शीलप्रज्ञः ।

"अपि च—प्रवृत्तेः शृङ्खलार्थं, दुष्प्रवृत्तेः संयमनाय त्वमत्र आगतवान् । किं तु न किमपि परिवर्तनं त्वयि लक्ष्यते । यः संयमं न जानाति । शृङ्खलां च नानुमन्यते । स किम्भूतं संसारं निर्मास्यति ?"

"अञ्जने ! नैकः संसारं निर्माति। साहस्थ्ये हि संसारो भवति। संसारे च साहस्थ्यं स्तूयते। अपि च संसारः उपभोगायनः। साहस्थ्यमत्र सहयोगः। अतः उपभोगात् पूर्वं सहयोगः आवश्यकः।

"शीलप्रज्ञ ...। भवान् भ्रान्तः। उपभोगे नानन्दो विद्यते"—

"युक्तमुक्तम्....। उपभोगे केवला विस्मृतिः। परमुपभोगस्य पूर्व-क्षणमवश्यम् आनन्दमयम्। अतएव समात्मीयता अपेक्षते।"

"भवान् यत् पूर्वक्षणं मनुते, तच्च आनन्दमयं इति वदति, तत् केवलम् आवेगमयम्....उत्कण्ठामयम्....सतृष्णम्"....

"तत्रापि आनन्द उपलभ्यते, अञ्जने....! कथं विस्मरसि ?"

नीलाञ्जनायाः शुष्कनेत्रगह्वरं जलाप्लुतं भवति।

आत्मानं पराजितं मनुते शीलप्रज्ञः। अञ्जना तु विमुखा। कथं कारमपि न बुध्यति। बोधयितुं च शीलप्रज्ञनिकटे युक्तिरपि नास्ति। पश्यत्यग्रे स तस्याः कुपितप्रेताकृतिम्।

शृणोति च प्रेतीभूतां वाचम्। बहु विचिन्त्य स अवदत्।

"अञ्जने...! संसारे वस्तुद्वयं वर्त्तते। बुद्धिः, वस्तुसत्ता च। अनयोः व्यवहार एव अस्माभिः क्रियते। अनयोश्च सदुपयोगः समात्मीयतया अस्माभिः काम्यते। एतदर्थमस्माकं जन्म"

"न भवतो बुद्धिः वर्त्तते। न वा वस्तुसत्ताविषये धारणा अस्ति। नामानि एव भवान् जानाति। नाममात्रज्ञाने सदुपयोगः न सम्भवति, शीलप्रज्ञ !।"

"एतदर्थं समन्वय अवाश्यकः"—

"विरमतु भवान्। अपदार्थस्य पदार्थचिन्ता मास्तु। य आत्मानं न जानाति अपरं वा कथं जानीयात् ? प्रत्यागच्छतु भवान्। आत्मनिरीक्षणं करोतु। आत्मनिरक्षणे मानवस्य उत्तरणं सम्भवति। तदेव अङ्गीकरोतु।"

विचलिता सा गन्तुमुद्यता।

सांप्रतिमः बकध्यानेन उभयस्य दर्शनसारं पेपीयमानः आसीत्। शीलप्रज्ञश्च नीलाञ्जनायाः कैशोरकोपम् आविष्कुर्वन् आसीत्। पूर्व-प्रणयित्वम् उद्भाव्य सखेदं सः अन्वनयत्।

"अञ्जने....! न सर्वदा विवादः समाधातुं शक्यः।"

परावर्त्य सा अपश्यत्—अनुनयति स एव श्रेष्ठी। तथापि सा दुःखं निह्नूय दृढमवदत्।

"नायं विवादः। अपितु मानविकमनुशासनम्।"

"अञ्जने....!" चकित आसीत् शीलप्रज्ञः।

"समयो विगतः, शीलप्रज्ञ....? संसारार्थं वेलाऽपि न विपुला वर्त्तते। पुनः त्रुटितुं माऽगच्छतु अत्र भवान्।"

लोतकाऽप्लुता श्वेताम्बरी प्रस्थिता।

तस्या मन्थरगतिं लक्षयति शीलप्रज्ञः। नेत्रतः अवाध्यमश्रु निर्गम्य श्मश्रुषु निह्नुतम्। आत्मदलने स निमग्नः। सांप्रतिमः उभयार्थं व्याकुलः।

पतिमुखसीमारेखातः अपसृता पत्नीभवनस्य कामना। संसारपरिधिं संस्पृश्य प्रत्यावृत्ता पतित्वस्य अनुतप्तसंज्ञा। उभयमध्ये व्यवहितम् असमयच्छन्दः।

●

रात्रिः गभीरा....।

अतिक्रान्ता अर्धरजनी। उपविश्य अनुशोचयति निःसङ्गसंचारी शीलप्रज्ञः। गता नैके दिवसाः। तथापि पदमिताऽपि हृदयानुगुणा वाणी न कुतः श्रुता। केवलमग्रे प्रयत्नस्य तुच्छता। संचरणस्य निरुपशमा क्लान्तिः।

ज्वलति प्रदीपः। शिखा च दोदुल्यते। निद्रा नयनावलम्बिनी। शीलप्रज्ञः अनुशीलयति—

"सद्योजातशिशोः मुष्टिषु शून्यता विद्यते इति जानीमहे। तथापि अस्माकं कौतुहलं भवति यत् स मुष्टिं मोचयतु। ततः ...? ततः अस्माभिः आविष्क्रियते सैव शून्यता" —

खेदाकुलं तस्य मनः।

"शून्यताया अन्यनाम ध्वंसः। ध्वंसो जीवनजडितः। प्रतिमुहूर्तं नश्यति जीवः। ध्वंसस्य हि कारणमानुसङ्गिकम्। ध्वंस अनादिः, अनन्तः,....नित्यः....क्षयिष्णुतायाः शेषपरिणतिः। वस्तुसत्तैव ध्वंसस्य आधारः। ध्वंस एव वस्तुनो तादात्म्यम्।"

दीपशिखा पवनेन निर्वाणप्राया अभूत्। करेण पवनमवरुध्य क्षीणमहसत् शीलप्रज्ञः।

"इयं च सदा अस्थिरा। विश्वश्च अस्थिर धर्मा। अस्थिरता च जीवनधर्मः। तर्हि गतिः कुत्र....?

सुदीर्घं निश्वसितवान् शीलप्रज्ञः। मनसि संलग्नः नीलाञ्जनाया विवादः। "यदि उत्पत्तिर्नास्ति तर्हि ध्वंसोऽपि नास्ति। यदि स्थिरवस्तु नास्ति तर्हि अस्थिरस्य कल्पनामपि कर्तुं न शक्यते। उत्पत्तिः....ध्वंसः, स्थिरम्....अस्थिरम्....सर्वमेतत् भाषिककल्पना। आत्मनिरीक्षणं करोतु भवान्। निजत्वम् आविष्करोतु"....।

निजमनोजाम् अञ्जनां बोधयितुं तथापि स यतते ।

"नहि अञ्जने....! न कदाऽलं सम्मतो भविष्यामि । नाऽहं संसारी, न वा सन्यासी । अत उभयं प्रति मोहो मे विगतः । निरतमहं ध्वसं प्रत्यक्षीकरोमि । ध्वंसो दुरुपनेयः । इतः परं न किमपि विद्यते....। केवलध्वंसः.... केवलध्वंसः....।

"इतः परं शान्तिरस्ति, शीलप्रज्ञ ।"

"शान्तिः स्वयंसम्भवा । ध्वंसात् पूर्वं शान्तिः वर्त्तते । ध्वंसात् परमपि शान्तिः संभविष्यति । ध्वंसेऽपि शान्तिः विलीना वर्त्तते । शान्तिः ध्रुवभाविनी व्याप्तिमती । ध्वंसेषु शान्तिमाविष्कुरुष्व । शान्तिरेव पूर्णतया अपरशब्दिमा ।"

"शान्तिः ? ध्वंसात् परं को वा वर्तिष्यते शान्तिमनुभवितुम् ?"

प्रसन्नः अभूत् शीलप्रज्ञः । आत्मदैन्यमपसृतम् । प्रगाढविश्वासः स्वस्मिन् समजनि । उदभासत मनसि प्रथमानुभूतः अर्धशेषमार्गः । पूर्णिमा रजनी । खर्जूरछाया । नीलाञ्जनायाः कुमारी प्रतिमा ।

इतः परम् ? इतः परं सः प्रयास्यति अर्धशेषमार्गसमीपम् । तत्रैव स्थापयिष्यति आश्रमम् ! गृहं रचयिष्यति खर्जूरछायातले । तत्र चिरवसतिं संपाद्य देशदेशान्तरे सहस्थवाणीं प्रचारयिष्यति । जनानामुपकाराय धनानि संग्रहीष्यति । स एव आश्रमो भविष्यति—दुःस्थानां आश्रयः । अनाथानां कर्मशाला । असहायानां सहायः । शिशूनां क्रीडास्थली । बालकानां पाठपीठम् । युवकयुवतीनां विहारः । वृद्धानां धर्मक्षेत्रम् । पथिकानां रात्रिनिवासः । आगन्तुकानां पुण्यभवनम् । जिज्ञासूनां शिक्षातीर्थम् । रोगिणां चिकित्सासदनम् । भोगिनां यज्ञस्थानम् । योगिनां समाधिनिकेतनम्....

काकः शब्दापितः । प्रातः मन्थरम् । शीलप्रज्ञः किन्तु निरलसः । निजभावनया च गौरवमयः । सानन्दं देशान्तरं प्रतिष्ठते—

●

अलसतरुतले समासीना नीलाञ्जना। नवोदितकेशान् एकमेकमुत्पाटयति। वेदनासिक्तनेत्रतः बलात्कारमश्रु निर्गलति। तथापि न सा विरमति। मनसि नियतवैराग्यम्। अतीतमसत्यम्। वर्त्तमानं निरर्थकम्। भविष्यमपि प्राणहीनम् –

नीलाञ्जना निजपरिसरतः शीलप्रज्ञं न दूरीकर्तुं शक्नोति। स इह अवमानितः। तथापि अनुरागकेन्द्रबिन्दुतः न विच्युतोऽभूत्। सः अनुरागी। स इच्छति अनुभूतिम्। उपलब्धिरेव तस्य एकान्तलक्ष्यम्। तस्य कृते जीवनं पारिपार्श्विकसत्यम्। यत्र जन्म, जरा, व्याधिः, पापं, पुण्यं च— सर्वमन्तर्लीनम्। अस्य एव जीवनस्य इङ्गितं देहः। देहोऽपि कतिपय रहस्य-मिश्रित-सत्यस्य आधारः। सत्यमिदमर्थपूर्णम्। अस्मिन्नपि आनन्दो वर्त्तते। आनन्दोऽयं अनिर्वचनीयः।....अहसत् नीलाञ्जना। हासे तस्या संलग्ना आसीत् संसारस्य भासमानरूपसत्ता।

उत्पाटितकेशमूले तस्याः कति रक्तबिन्दवः शुष्का आसन्। कठोरशृङ्खलासु सर्वविधा प्रवृत्तिः निद्रिता आसीत्। उपवासः, संयमः, विकृतरूपता च तस्या एकैव अनुभूतिः।

"तव अनुभूतिषु उपलब्धिः नास्ति, सत्यं नास्ति, कार्यकारणयोः यौगपद्यं नास्ति, केवलं मरणं निकटायते....मरणं निकटायते, अञ्जने....?"–

शीलप्रज्ञस्य ( वद्दुदिनस्य ) अनुनयतः निर्गता आसीत् इयं व्यञ्जना। तस्य च अनुरोधं निजस्थीकुर्वाणा आसीत् नीलाञ्जना।

"अञ्जने...! जन्ममरणमध्ये साहस्थ्यमेव प्रणवः। अस्य एव प्रणवस्य स्पर्शः निद्रितात्मानं ज्योतिर्मयीकरोति—"

"नहि, पुर आगता अहम्। न कदापि प्रत्यावर्तिष्ये। संयमबलेन, शृङ्खलाबलेन, उपवासमाध्यमेन, व्रतसहायेन च निर्वाणं मया अधिगन्तव्यम्। निर्वाणमेव मम लक्ष्यम्"....

"अनुमोदयामि ते शृखलां, संयमं च। किंतु निर्वाणं न कदा प्रेतीकरणमभिप्रैति। निर्वाणम्....एका भावसता। निर्वाणार्थं न संयमस्य शृङ्खलायाः वा आवश्यकता। संसारनिमित्तं संयमः शृङ्खला च उपयुज्यते"....

नीलाञ्जना शीलप्रज्ञस्य उपस्थितिमनुभवन्ती आसीत्।

"अञ्जने....! युगपत् अहं, त्वां मां च अनुभवामि। किंतु तवानुभवो नेतादृशः। त्वं तु मरीचिकामनुसरसि। अनुभवे एव क्षिप्रप्रमोदस्य मधु आहरणीयं भवति। न तु अनुसरणे"--

वृक्षतलछाया क्रमशः संकुचिता आसीत्। निर्लिप्ता आसीत् नीलाञ्जना।

"अञ्जने! इन्द्रियग्राह्यवस्तु केवलं भावनामुद्दीपयति। उद्दीप्ता भावना शरीरमिङ्गितमयं करोति। इङ्गितमिदमबोध्यम्। यदि इङ्गितस्य रहस्यमाविष्क्रियते तर्हि देहः महीयान् भवति। देहस्थ-तथ्यं आत्मविजड़ितम्। देहस्य मर्मं यदि बुध्यते, गुरुत्वमाकल्यते तर्हि देहोत्तरपदार्थस्य अवधारणा सुलभा भवति। देहस्य अपव्ययः न काम्यः। देहस्य सदुपयोग एव सत्यसंस्कृतिः। तर्हि–किं वक्तुमिच्छसि, शीलप्रज्ञः?"—नीलाञ्जना स्वयं जल्पिनी भवति।

पृथिवी परिवर्त्तनशीला। यथा शब्दः परिवर्तते तथा अर्थोऽपि अस्थिरो भवति। प्रतिमुहूर्तमपि शब्दार्थयोः संबन्धः विलोक्यते। अतः न कोऽपि शब्दः अर्थस्य प्रकृतमर्म उपस्थापयितुं शक्नोति। अतः मम वचनमपि असत्यभाक् भवेत्। एतदर्थं तव अनुभवः आवश्यकः।"

"अनुभवार्थमेव एक मार्गः अनुसृतो मया"—

"अञ्जने........! अनुभवः–अनुसरणं च–, द्वयमिदं पृथक्वस्तु। अनुसरणे अनुभूतिः न मिलति। कार्यभाक एव अनुभवी भवति।"

"कार्यभाग्भवितुं को वा उपायः ? किमियं सहस्थता ?"

"हं......., सहस्थता—, नैकाकी नरः किमपि ज्ञातुं अनुभवितुं वा शक्नोति । अतः सम्यक् अनुभवनिमित्तं साहस्थ्यमावश्यकम्"

"साहस्थ्यं र्वाह निर्वाणम् ? निर्वाणमिव देहोत्तरवस्तु ?"

'नहि,—अस्य व्याप्तिः देहतः देहोत्तरपर्यन्तम् । पश्य, अञ्जने ! प्रवाह एव नदीनां परिचयः । नदीनां न चर्म अस्ति, न अस्थि विद्यते, न वा रुधिरमन्तश्चरति, न वा पृथुला मांसा अन्तर्वतन्ते । केवलप्रवाह एव तासां सत्ता । तथा इदं साहस्थ्यम् । आनुभविकं सत्यम् केवलं प्रणीय-सत्ता—अकरोकारमकाराणां यौगपद्यविभूतिः'—

"शीलप्रज्ञ....! शीलप्रज्ञ....!! शीलप्रज्ञ... !!

चीत्कुर्वाणा आसीत् प्रेतसारा नीलाञ्जना ।

गुहातो निर्गतः सांप्रतिमः । अपश्यत्—

नीलाञ्जना व्याकुला । उपसृत्य मृदुकंठेन प्रावोधयत्—

"श्वेताम्बरी ! त्वं निर्वाणोन्मुखिनी । व्याकुलता न शोभते त्वयि । विपथयति एतादृशी चपलता ।"

"आचार्य ! अद्य वदतु किमिदं निर्वाणम् ?"

"अधुना ? अस्मिन्नवसरे ? असमये कथमयं प्रश्नः ?"

"न किमपि श्रोतुमिच्छामि अद्य । अद्य भवान् उत्तरतु ।"

"किमियं ते ध्रुवेच्छा ?"

"हं...., आचार्य ! अद्य, अधुनैव अस्य प्रश्नस्य उत्तरमिच्छामि"—नीलाञ्जना सांप्रतिमस्य मुखं पश्यति ।

"किमर्थमियं नीरवता ? तर्हि भवताऽपि न ज्ञातम् ?"

"श्वेताम्बरि ! सर्वविधभावनायाः स्पष्टीकरणार्थं उपयुक्तः शब्दः नोपलभ्यते"—

"नहि, इयं भवतः छलना"

"सत्यस्य अपह्नुतिः न संभवति, श्वेताम्बरि....!"

"यदि निर्वाणं सत्यं, तर्हि तस्य किं स्वरूपम् ?"

"भाषासु कस्याऽपि स्वरूपं बद्धुं न शक्यते"

"इयं भवतः प्रतारणा"

"श्वेताम्बरि ! धर्मः न कमपि प्रतारयति ।"

"किंतु, नूनं विपथयति"—

'विपथगामिनः सन्मार्गमभिनिविश्यन्ते धर्मेण ।'

'तर्हि, किं धर्मस्य लक्ष्यम् ?'

'पवित्रजीवनयापनम् । शृंखला च ।'

'निर्वाणस्य स्थानमिह कुत्र ?'

'निर्वाणं मरणोत्तरा एका आनुभविकी सत्ता ।'

'यदि शरीरं न विद्यते, तर्हि अनुभवः केन प्रकारेण संभवेत्—?'

'आत्मा एव निर्वाणमनुभवति ।'

'नहि, नेत्थं वक्तुं शक्यते । आत्मा निर्लिप्तः । यः आत्मा दुखं सुखं वा नानुभवति कीदृशं स निर्वाणमनुभवेत् ? पुनश्च यत् अनुभवितुं न शक्यते तस्य कल्पनायां को वा लाभः ? को वा उपकारः ?'

"श्वेताम्बरि ..। वैदुष्यनिमित्तं त्वमुद्धता । धर्ममपि कलङ्कयितु-मिच्छसि । यन्निमितं जीविता तमद्य उच्छेत्तुमिच्छसि ! किमिदमेव प्रत्याशितं त्वत्तः धर्मेण....?"

"मैवं वदतु भवान् सर्वत्र परीक्षणं निरीक्षणं च सत्यमवधारयति"—

"नहि, बहुपरीक्षानन्तरं धर्मोऽयं प्रतिष्ठतः । बहुमुखी परिकल्पना च बहुपूर्वं परिसमाप्ता ।"

"परीक्षा न कदा समाप्ता भवति, आचार्य ! यथा वस्तुनः स्थितेः प्राक् परीक्षा, तथा वस्तुस्थितेः परमपि परीक्षा अनिवार्या"—

"केवलं परीक्षासमाश्रयणेन न कोऽपि पदार्थः प्रतिष्ठातुं प्रतिपादयितुं वा शक्यः।"

"इदमपि अवधेयम्, परीक्षा कस्मिन्नपि सिद्धान्ते उपनीता भवतीति"—

"श्वेताम्बरि....! तव धैर्यच्युतिः लक्ष्यते। हीनसंस्कारः समुदितः त्वयि। अतः पुनः भिक्षाटनं कुरुष्व? ग्रामात् ग्रामान्तरम्, देशतः, देशान्तरं संचर। अनुभूतिरेव सर्वं दर्शयति"—

प्रस्थितवान् विक्षुब्धः सांप्रतिमः।

नीलाञ्जना दण्डायमाना। नयनपुरतः पर्वतः धूमिलः। सूर्यं जलदस्य अन्तस्थः। अतः न दृश्यते। तथापि रश्मिः अनुभूयते। उष्णता स्पर्शक्षमा। वृक्षस्य छाया किन्तु न दृश्यते। छायाः रश्मयश्च परस्परमन्तर्लीना? उभयस्य वर्णमपि एकात्मम्। परितः उभयस्य यौगपद्यसत्ता। अधिकं किमपि नास्ति। केवलमनुभवः....अनुशीलनम्....अन्तर्दर्शनम्....

अपूर्वमानन्दमन्वभवत् नीलाञ्जना—

उज्ज्वलस्वस्तिकस्य आलोकमनुपश्यति सांप्रतिमः—

अद्यत्वे तु नीलाञ्जनायाः विवादनिमित्तं सः व्यथितः। विवादात् परं न कदा परस्परयोः सम्मुखसंलापो भवति। नीलाञ्जना सदा तमुपेक्षते। प्रातरुत्थाय भिक्षार्थं गच्छति। सायंकाले प्रत्यागम्य गुहातमसि शेते। इत्थं निजरुच्यनुसारं किं करोति, कुत्र च गच्छति, न किमपि वदति। प्रेतसारा मूर्तिः तस्याः अनुदिनं शीर्यते।

सांप्रतिमः तथापि अबुद्धः—किं निमित्तं सः तदर्थं दुःखायते ? कथं च विमनस्कः ?

सांप्रतिमः शान्तः। संसारपरिसरे मनः तस्य भ्राम्यति। अतिक्राम्यति अतीतम्। मलिनयति निजकार्यकलापम्। बाधते च स्वैराभिरुचिम्—निजातीतं प्रति तस्य आत्मीयता वर्धते। एतदर्थं सः आनन्दमनुभवति—

दिवा मध्याह्नोन्मुखः—

नित्यकर्म समाप्य नीलाञ्जना तस्मिन्नेव मार्गे भिक्षाटनाय प्रस्थिता। सांप्रतिमः तस्याः मन्थरमार्गं लक्षयति। रुग्णचरणे तस्याः शक्तिः नास्ति। श्वेतवसनेऽपि औज्ज्वल्यं नास्ति। स्थिरशरीरे केवलं कौमारयौवनजराः संमिलिताः। तथापि मार्गः एकपादपरिमितेन पश्चात् स्खलति।

दुःखपरिवाहिनी परिस्थतिः। सांप्रतिमः मनस्यति तस्याः रौप्यनूपुरम्। कियती उपफुल्ला नासीत् सा तद्दिने ? रौप्यनूपुरेऽस्मिन् कियत्स्वप्नाः संलग्ना नासन् ? यदीदं तस्याः चरणे अस्थास्यत् तस्याः गतिपथं नूनं पर्यवर्तिष्यत्। सा संसारिणी अभविष्यत्। इदं च यत्नेन समरक्षिष्यत्। दर्शं दर्शं नूनमानन्दमन्वभविष्यत्। परिशेषे निजकन्यामुपाहरिष्यत्। आश्रमे निपतितमिदं पूर्ववत् न शोभते। न वा अस्य कृत्रिमामनुरणनं श्रवणं मधुरयति ? अद्य किन्तु तया सह सर्वमपक्षीयते।

"तर्हि, तस्याः भविष्यम् ?"

"मम भविष्यमिव"

"किं मम भविष्यम् ? निर्वाणम् ? मरणं वा ?"

'तर्हि, धर्मस्य भविष्यम् ?

'स्थितिमत्ता। प्रसरणशीलता। बहुजनवेद्यता।'

निजप्रश्नसमाधानमध्ये विरोधमनुपश्यति सांप्रतिमः। सः स्वयमिच्छति निर्वाणम्। किन्तु धर्म इच्छति स्थितिमत्ताम्। महदाश्चर्यम् ? समूहस्य लक्ष्यं भिन्नम्। समूहानुगतव्यक्तेश्च मतं भिन्नम्—?

व्यक्तेः स्वरः, समूहस्य च स्वरः, अनयोः समूहस्य स्वरे प्राधान्यम्। तर्हि समूहस्य मार्गे व्यक्तिः किमर्थं गमिष्यति ?—सांप्रतिमः आत्मानं पृच्छति ?

'एकव्यक्तिस्वरो यदा बहुव्यक्तिसंपर्कितो भवति तदा स एव स्वरः समूहस्य स्वरो भवति। स एव शिरसि ऊह्यते। व्यक्तिभिश्च अनुमन्यते। अतः व्यक्तिसमतन्त्रः समूहः। समतन्त्रता एव समूहस्य शासनम्। अयं च पूर्णोदयः। समसमृद्धिनीतिः। समवसतेः सहानुयोगस्य च आदर्शः।' प्रकृतिस्थः अभूत् सांप्रतिमः। स्वरोऽयं न स्वकीयस्य। शीलप्रज्ञः तस्य स्वरमपि अधिकर्तुमिच्छति।....विपथयति एतादृशी भावना। धैर्यहानिं संघटयति—'नहि, दमनीया इयं व्यस्तता'

सांप्रतिमः दण्डायमानोऽभूत्। गुहोन्मुखो भवितुमुद्यतः।

पार्वतीयमार्गे नीलाञ्जना मिश्रिता आसीत्।

कान्तारमतिक्रम्य प्रयाति नीलाञ्जना। प्रत्यावर्तनस्य आशा नास्ति। तया सर्वं हारितम्। लक्ष्यमपि न किमपि वर्तते। अन्ततः यत्र कुत्रापि आश्रयं नीत्वा अवशिष्टं जीवनं वाहयिष्यति।

अद्य अनुभूतिषु केवलं पारतन्त्र्यं, विवादः, अनात्मीयता। नवानुभूतये क्व वा गमिष्यति ? प्रवृत्तिः शिथिला। देहः असमर्थः। सा पुरश्चरति ?—इयमेव तस्याः नवानुभूतिः।

अग्रे ताम्रपर्णी वनानी। नीलाञ्जना तामुद्दिशति। तत्र च विश्रामार्थं निश्चिनुते। पश्यति–कति कर्मक्लान्ता अत्र आमोदन्ते। कति च पथश्रान्ताः श्वेताम्बराः विश्राम्यन्ति। पक्षिणोऽपि विषण्णतामपाकुर्वन्ति।

—मध्याह्नप्रहरः व्याप्तिमान्।

त्यागपूता वनानी नवपल्लविनी। सान्द्रकिसलयतले छाया शान्तिमती। मलयः आयुष्मान्। श्रीमती च परिवेष्टनी। निष्कायनिपानेषु सूर्यः ज्योतिष्मान्। स्वस्तिलोमिनी च पर्वतमाला—

भिक्षास्थालीमवतार्य वृक्षमूले सा स्थापितवती। मलयस्य नवस्पर्शमवाप्य आश्वस्ता अभवत्। दुर्बलताया बाधा मनाक्। विरता। निपानजलपानेन पुनः शक्तिमाहृतवती। स्वेदाः तस्याः शीतलीभवितुमारब्धाः—

दूरतः तस्याः नयनपुरतः समभासत धवलबिन्दुद्वयम्। बिन्दुः क्रमशः वर्धते। तां च उपायाति। स्थिरतया संपश्यति नीलाञ्जना। वृक्षान्तराले कदा बिन्दुद्वयं निह्नूयते। कदा पुनः प्रकाश्य उपसर्पति। अन्ततः मनुष्याकृतिः स्पष्टा अभूत्। सा निर्धारितवती—एकः श्वेताम्बरः, अपरा श्वेताम्बरी। अरण्ये उभयोः अबाधमिलनम्। सहचरणं–समप्रकृतिकता—अपूर्वरतिमहोत्सवः। धर्मात् भयं नास्ति। पापात् जुगुप्सा नास्ति। पुण्यार्जनस्य चिन्ता नास्ति। केवलं आश्रमविहितनिषेधस्य पुनः प्रतिषेधः। प्रवृत्तिचरितार्थता। देहार्थं कातरता। दैहिकस्पर्शनिमित्तमाकुलता। आकण्ठभोगोन्मुखता।...."एतत् सर्वं जीवनस्य नित्यपृष्ठभूमिः। एतदर्थं व्यवहारः आवश्यकः। एतन्निमित्तं भाषा अपरिहार्या। एतदर्थं-वसतिः अनिवार्या। एतत् कृते जीविकाया उपयोगः। एतदर्थं संसारः कर्ममुखरः। परमस्य समाप्तिः कुत्र....?

चिन्तिता आसीत् नीलाञ्जना।

मध्याह्नमलयं पिबन्ती आसीत् श्वेताम्बरी तरुतले। अङ्के तस्याः मस्तकं निधाय आलुण्ठितः श्वेताम्बरः भूमौ। मुण्डितमस्तके तस्य हस्तं संचाल्य धूलिमपसारयति श्वेताम्बरी। पाण्डुपर्णानि आहृत्य निजमनोनुसारं

तस्याः पादसन्धिषु स्थापयति श्वेताम्बरः। म्लानकुसुमानि च एकत्र आनीय एकमेकं स्थापयति तस्याः कर्णोपरि। आनतवक्षोजस्य स्पर्शदानाय मध्ये मध्ये अवनता भवति श्वेताम्बरी। तस्याः जानुतः चरणाङ्गुलीपर्यन्तं नखेन विहरणस्य गतिं परिष्कुर्वाणो वर्त्तते च श्वेताम्बरः। श्वेताम्बरीमुखे स्मितस्य असकृत् तरङ्गः। श्वेताम्बरोऽपि सहासं भाषणमाणः—"सत्यं, श्वेताम्बरी ! वयं कियन्न सुखिनः ?" श्वेताम्बरी निरुत्तरा। तस्याः स्मितमेव श्वेताम्बरप्रश्नस्य उत्तरम्....।

दृश्यमिदमवलोक्य नीलाञ्जना चकिता अभूत्। मनसि तस्याः क्रोधः समजनि। निन्दितुं च वाक् प्रस्तुता अभूत्। किन्तु आत्मानं संयम्य मानसं बोधितवती सा—यत्र निष्ठुरनिषेधः तत्रैव प्रवृत्तिः प्रखरा। यत्र निषेधः शृङ्खलानुगामी तत्र प्रवृत्तिः अबाध्याऽपि संयता। अतः पूर्णतः उच्छेदः न शृङ्खलायाः संयमस्य वा अर्थः....।

किन्तु यदि एते धर्मं नाभिनन्दन्ति तर्हि कथं न संसारिणो भवन्ति ? संसारधारा सर्वेषां पक्षे किं नोपयुक्ता ?—सहानुभूतिशीला आसीत् अनयोः उपरि। मनसि विकारं नानीय अन्तिकं गतवती। दूरतः पादपान्तराले दण्डायमाना आहूतवती—"श्वेताम्बर...! इत आगन्तुं शक्यते ?" भीतिसंकुलः अभूत् सुप्तः श्वेताम्बरः। श्वेताम्बरी अपि एतादृशं स्वरं निशम्य अकम्पत।

"किं क्रियते अत्र ?" दृढमवदत् नीलाञ्जना।

श्वेताम्बरः अन्वनयत्—"श्वेताम्बरि....! भवती उन्नत वयस्का। अभिज्ञा अपि। जीवनविषये किमपि गोप्यं नास्ति भवती निकटे।"

नीलाञ्जना तस्य मुखं पश्यति—कतिकातररेखासहितं भोगोन्मुखकामनायाः संघर्षो भवति तस्मिन्। प्रगल्भभावेन तथापि श्वेताम्बरः भाषते—

"इदमरण्यम्। अत्र विषमपि नवनीतम्। अत्र च निशि धवः अधवलो भवति। आश्लेषः श्लेषमयो भवति। अत्रैव चन्द्रः, तटस्थः शशकश्च युगपत् प्रत्यक्षीक्रियते। आश्रमस्य गुहासु तु अन्धकारः....

"को भवतः अभिप्रायः ?"

"अभिप्रायः सुस्पष्टः। ....शक्तेः अपचयार्थं न शरीरस्य सृष्टिः। उपवासः, देहकृशीकरणं, सौन्दर्यपरिहारः न देहस्य लक्ष्यम्। देहः शक्ति-संचयातनः। सांयमिकः उपभोगो देहस्य पृष्ठभूमिः। शक्तिसाधनार्थं च देहः उपकरणम्। शक्तेः भोगश्च सृष्टेः आदियन्त्रम्"—

"तर्हि, किमर्थं श्वेताम्बरः संजातो भवान् ?"

"पश्यतु भवती वस्तुमात्रं रूपद्वयं वर्तते।

बाह्यरूपं—अन्तः सत्ता च। श्वेताम्बरं अस्माकं बाह्यरूपम्। धवलवर्णं विना नैतत् किमपि। इत्थंभूतं वर्णं वस्तुनः बाह्यरूपम्। बाह्यरूपदर्शनेन वस्तुनः प्रकृतज्ञानं न भवति। अतः वर्णभिन्नत्वेन वस्तु अवधारणीयं भवति। वर्णस्य भिन्नतायामेव वस्तुनः सम्यक् ज्ञानं सम्भवति। अवस्तुनः ज्ञानेनात्मा शान्ति लभते।"

"अवस्तु ...?"

"हं, अवस्तु। वर्णमेव अवस्तु अत्र। यत इदमाधेयम्। परावलम्बि। आधेयं, न कदा निजत्वं जानाति। अतः अस्वतु।

"मनुष्यस्तु सदा परावलम्बी। तर्हि सोऽपि अवस्तु ?"

"सत्यमनुभूतम्। किन्तु मनुष्यः न परावलम्बो, अपि तु परस्परावलम्बी। आधेयो भवितुं शक्नोति। अतः सः मनुष्यः। अन्यथा देवः किं वा पशुरभविष्यत्। कारणं देवः कल्पनासु आधेयः। पशुरपि बुद्धिवशः, अधोनस्थः। अन्यस्य अधीनता नामतस्य इच्छानुसारिता। अर्थात् इच्छासु पशुः आधेयः।"—नीलाञ्जना शृणोति केवलम्।

"पुनश्च इदं वक्तुं शक्यते—व्यक्तिः समूहावलम्बी। तथापि उभयस्य स्वातन्त्र्यामनुमन्तव्यम्। अतः धर्मः यद् वदति तदेव करणीयमिति न। धर्मानुगतव्यक्तेरपि महत्त्वं वर्तते।"

"नहि, इयं भावना भवतः धर्मविरुद्धा। भवतां नैतिकमधःपततं संजातम्। धर्मदीक्षिता भवतन्तः धर्ममुल्लङ्घन्ति। धर्मस्य नियमान् न

पालयन्ति। सत्यं व्यभिचरन्ति। प्रमाद्यन्ति पदे पदे। कलङ्कयन्ति च पुण्यताम्। नैतत् समुचितम्"—

"यथा मन्तव्यम्। नात्र विरोधः अस्माकम्। यथारुचि अनुष्ठीयते अस्माभिः। अस्माकमपि मौलिकाधिकारः वर्तते।

"मौलिकाधिकारस्तु न स्वेच्छाचारिता" –

"अनुमोद्यते। किंतु यत् आत्मप्रतिकूलं तदपि अनुष्ठातुं न शक्यते। अपि च लघूनामानुकूल्याय बहूनामुपरि कस्यापि अननुमतस्य न्यासः न समुचितः। यत् साधारणतया अनुसरणीयं भवेत् उपकाराय, उन्नतये च प्रकल्पेत् कष्टमपि तत् ग्रहणीयं भवति।

नीलाञ्जना श्वेताम्बरीमपश्यत्। तस्यां पूर्वकातरता नासीत्। वरं सा प्रसन्ना। अन्ततः सर्वोपरि सा टिप्पणीमदात्—'देवि! देह माध्यमेन हि देहोत्तरस्य परिचयः मिलति। देहो न अपचेतव्यः।"

श्वेताम्बरी प्रस्थिता। पश्चात् अनुसृतवान् श्वेताम्बरः।

नीलाञ्जना स्तब्धचकिता। मध्याह्नं अवनतम्। दूरे वनानीप्रान्ते धवलबिन्दुद्वयं संमिश्रितम्।

नीलाञ्जना पुरःसृतवती।

अवगुण्ठनतले ज्योतिःस्नाता पौर्णमासी। तालचूडासु अन्धकारः श्यामलिमः। आश्रमतः निर्गतः घण्टाध्वनिः। दीपावली विराजिता चतुःपार्श्वे। भारवाहिनः कियत्कालं विरताः। भारं च निधाय प्रणतिं न्यवेदयन्।

—चन्द्रः उदितः।

खर्जूरच्छाया स्पष्टाऽभूत् अर्धशेषमार्गे। समस्वरा मन्त्रावृत्तिः वायुषु तरङ्गानसृजत्। मुखरितः अभवत् आश्रमः। जनाः आवृत्तिषु तन्मयाः। एकस्मिन् मन्त्रे समतानिकस्वरः संगीतिमयः—

"साहस्थ्ये मां संगमय
साहस्थ्ये मां संयमय
साहस्थ्यं मे समन्वयम्
साहस्थ्यं मे समात्मीयम्
साहस्थ्यं हि शान्तिमयम्
साहस्थ्यं हि ज्योतिर्मयम्।"

अतिथीनां प्रतीक्षायां द्वारदेशे उपस्थितः शीलप्रज्ञः। दृष्टिः तस्य मथ्यमाना वर्त्तते अर्धशेषमार्गोपरि। यत्र खर्जूरच्छाया क्रमशः स्पष्टीभवति।

अद्य आश्रमस्य प्रतिष्ठादिवसः।

बहवः आमन्त्रिताः। दानिनः, धर्मिणः, गुणिनः, सन्यासिनः, श्वेताम्बराः, जनपदवासिनः, ग्रामवासिनः—अन्ये च बहवः। बालवृद्धवनिता इति—सर्वेषामद्य महोत्सवः। तेषामेव दानेषु आश्रमोऽयं निर्मितः। विशालगृहाणि च आश्रयार्थं निर्मितानि। अनेकलघुनिलयाश्च अर्धनिर्मिताः।

गृहाणां मुखशाला शीलप्रज्ञस्य वासभवनम्। तत्रैव मुख्यपूजा भवति। ईश्वरस्य कल्पितसहस्थमूर्तिः तत्र प्रस्तरखोदिता। प्रदीपः सदा तत्र देदीप्यमानः।

अदीक्षिता अपि अद्य तस्य बहवः भक्ताः। सर्वे निजनिजकार्यमिति मत्वा सम्मानास्पदानामर्चनार्थं तत्पराः। बहवः धनिनः आगच्छन्ति। यथाशक्ति च धनानि अर्पयन्ति। अतः कति भक्ताः धनसंरक्षणाय व्यापृताः। यथायोग्यं कति च भोजनैः जनान् प्रीणयन्ति। कति च बन्धुजनानां अपूर्वसमागमे सावेगमालयन्ति। इत्थं नानाविधकर्मसु अनेके व्यापृताः।

शीलप्रज्ञः केवलं निर्दिशति—"इत्थं कर्तव्यम्। इदं कर्तव्यम्। तत् कर्तव्यमिति।"

बहवः आगताः। आगच्छन्तोऽपि दृश्यन्ते। आगच्छन्ति अपि। कति च प्रतिष्ठन्ते। सर्वे शीलप्रज्ञस्य साधूद्यमं प्रशंसन्ति। तस्य नवदिग्दर्शनं च अभिनन्दन्ति। बहवश्च तमीश्वरीकृत्य पूजयन्ति, प्रणमन्ति मनस्कामनां याचन्ते। व्याधिमुक्तो भवितुं प्रार्थयन्ति। पुत्रकन्यादिप्राप्तये आशीर्वादं भिक्षयन्ति। निजदुरवस्थायाः उन्नतये सदिच्छां कामयन्ते। दुर्गतिवारणाय अनुनयन्ति। निजस्थानस्य पवित्रीकरणाय आमन्त्रयन्ति। बहवश्च नाना-द्रव्याणि उपहरन्ति। पुष्पमाल्यं परिधापयन्ति। आश्रमस्य उन्नतये शुभानि शंसन्ति। वृद्धाः तस्य दीर्घजीवनं अभिलषन्ति।

शीलप्रज्ञः अद्यत्वे ईश्वरीभूतः। तथापि मनसि अहंकारो नास्ति। गौरवभावना नास्ति। जनप्रियतायाः अभिमानं नास्ति। निजकृत्यर्थमपि धन्यंमन्यता नास्ति। केवलं स द्वारदेशे प्रतीक्षते। प्रतिमुखं सम्यक् अवलोक्य परिचिनुते। बहवः आगताः। समवेताः। प्रस्थिताः। तथापि न सः सन्तुष्टः। स्वप्नचर्या तथापि न समाप्ता। दृष्टिषु सर्वमपि अदृश्यम्.... अकिंचित्करम्....

—मध्यरात्रिः उत्तीर्णप्राया।

जनाः विरलाः। कोलाहलः कृशतरः। शीलप्रज्ञः अन्तः प्राविशत्। अपश्यत्। कति भक्ताः तथापि व्यापृताः। शीलप्रज्ञः निरदिशत्—'अद्य

कर्म एतावति तिष्ठतु । भवन्तः भोजनं समापयन्तु । विश्रामं च लभन्ताम् । श्वः अवशिष्टं करिष्यामहे ।'

तथा अकुर्वन् भक्ताः । शीलप्रज्ञः निश्चिन्तोऽभूत् । आश्रमस्य मुखशाला नीरवा अभूत् । दीपा अतैला अभूवन् ।

—आश्रमः विश्रामनिद्रितः

शीलप्रज्ञः बहिरागमत् । कियद्दूरे च आश्रममपश्यत्—अपूर्वसाफल्ये हसति आश्रमसौधः । तदुपरि प्रतिफलति चन्द्रस्य उदाररश्मिधारा । पौर्णमासी अतिकारुणिका । निशार्धं शीतलम् । आत्मध्वनिमुत्तोलयति मौनता महिममयी ।

ततः आकाशमपश्यत् शीलप्रज्ञः—छायापथः रजताभः । तारकामुखे असीमस्य सुहासः दीप्तिमान् । शून्यतायाः नीलमविस्तृतः स्पर्शकाङ्क्षिणी । नश्वरविश्वोपरि शाश्वतस्त प्रीतिमयी आत्मीयता रतिप्रवणा—

अर्धंशेषमार्गमुत्थितवान् शीलप्रज्ञः । खर्जूरछाया मार्गमध्यतः मनाक् स्खलिता आसीत् ।

सः अन्वभवत् ।

नीलाञ्जनायाः कैशोरप्रतिमा तथापि चापल्यं प्रकटयति । निजहृदये च अतीतस्पन्दनं जागर्ति । नयनान्नर्भाषाऽपि व्यक्ता भवति । अधरः प्रीतिकातरः संजायते । रौप्यनूपुरस्य क्षणिकमनूरणनम् उद्दीपयति मानसम् । परस्परप्रशंसा च कण्ठस्थीभवति । यदि सा निकटे अभविष्यत् तर्हि ताम् अवदिष्यत्—

"अञ्जने....! अहमद्यापि श्रेष्ठी । इयं च मे त्वदर्थं मानसिकी । त्वत्-कृते च उपहारः । अयं मे धर्मः । पश्य ...., अञ्जने....! प्रासादोऽयम् आत्मीयतायाः संकेतः । अत्रैव षडऋतवः अवतरिष्यन्ति । अत्रैव रजनी अभिव्यक्ता भविष्यति । दिवसस्य सत्यमिहैव आविष्करिष्यते ।"

किन्तु स्पर्शकातरा अद्य खर्जूरछायातल-स्मृति—

शीलप्रज्ञः प्रकृतिस्थः संजातः । खर्जूरस्य सोपानानि दृष्ट्वा ।

सः स्वयमजल्पत्—"इत्थं मनुष्यः यावत् वर्धते तावत् स्मृतिसोपानानि मनसि सन्निधीयन्ते। अद्य अनुभूतिः श्वस्तनस्मृतिषु अणीयसीभवति।"

दिनानि व्यतीतानि....बहूनि....बहूनि....बहूनि...."अर्धं वयः व्यतीतम्। अर्धं वर्तते न वा, न जाने। तथापि दृश्यानि, दृश्ययोजनाश्च नेत्रतः नापसरन्ति। खर्जूरः वृद्धः संजातः। अहमपि अर्धोत्तरवृद्धः। किन्तु खर्जूरस्य छाया तथापि किशोरी...."

श्मश्रुषु हस्तं चालयति शीलप्रज्ञः। जृम्भारूपेण उदासीनता बहिरायाति—

न पुनः मिलनाय किश्चिदेकनिर्दिष्टः ऋतुः सम्भवेत्। अतीतं न कदा प्रत्यागन्तुं शक्नोति। नष्टस्य अन्वेषणं वृथा। यत् क्रियते तदेव सर्वस्वम्। यत् वर्त्तते तदेव रक्षणीयम्। यथाप्राणं उन्नतये यतनीयम्। नवीनं च आविष्करणीयम्...." आत्ममुक्ततया अहसत् शीलप्रज्ञः। नासः तस्य प्रतिध्वनितोऽभूत् आश्रमसौधे—

अहम्....अहम् ...अहम्....

अहं नाम एकाकित्वम्। अहं असंपर्किः। अहं स्वयं सहस्थः। अहं नीलाञ्जना। अहं शीलप्रज्ञः। अहं सांम्प्रतिमः। सर्वत्र एक एव अहम्। अहं आधारः। अहमाधेयः। अहं निरन्वयः। अहमेव अहम् एको निश्चल एककः। एकः स्थिरबिन्दुः। अहम्....अहम्....अहम्....

शीलप्रज्ञस्य अधरे हास उज्वलः। हासोऽयमभावीयहासः तथापि स प्रसन्नः। अनुभवति, तस्य रक्तकणिकासु सहस्थज्योतिः। स्नायुषु सहस्थस्य ज्योतिः। प्रवृत्तिषु नीलाञ्जना ज्योतिर्मयी। सांप्रतिमः दीप्तिमयः। विश्वः आत्मीयः। स्वयमानन्दमयः—

—अन्तयामा रजनी।

निजवासं प्रत्यागच्छन् आसीत् शीलप्रज्ञः। चक्रवाकः तस्य शेषविलापं उपसंहरन् आसीत्। खर्जूरछाया मार्गतः अधः स्खलिता आसीत्।

•

—वसुधा उन्निद्रा....

गृहात् गृहान्तरम्, ग्रामात् ग्रामान्तरं, जनपदत अन्यजनपदमिति भ्रमति नीलाञ्जना। एकाकिनी अपि भीतिः नास्ति। शरीरार्थं चिन्ता नास्ति। वसतये अन्वेषणं नास्ति।

तस्यामपि जनानामविश्वासो नास्ति। सर्वत्र सम्मानं, आमन्त्रणं, आवाहनं, अर्चनं च प्राप्नोति सा। किन्तु यत्र गच्छति शृणोति शीलप्रज्ञस्य देवोपमव्यक्तित्वविषये। तस्य जयगानम्। एतदर्थमपि सा आग्रहिणी। सा भ्रमणाय केवलमुत्सहते "कुत्र तस्य प्रशंसा नास्ति" इति ज्ञातुम्। किन्तु पश्यति—सर्वस्मिन् ग्रामे तस्य वसतिः। ग्रामस्य सर्वे मार्गाः तस्य मार्गाः। सर्वत्र च उत्तरं मिलति

"अनेन पथा सः ग्रामान्तरं गतः—"

अन्ततः सा निश्चिनुते—'सः बहुदूरं गतः।" किंतु न ज्ञातुं पारयति—सा स्वयं कियद् दूरमागता ?

नदीकूले संचरति नीलाञ्जना। अदूरे नदीमध्ये तरणी मन्थरगामिनी। तां लक्ष्यीकृत्य सा मन्दवेगा। शीतलवातः वत्सलयति आत्मानम्। निजोपरि सा स्नेहिनी भवति। गीतेः आवृत्तिः तां ग्रामान्तरस्य उपान्त-प्रदेशे प्रापितवती।

नीलाञ्जना दूरे अपश्यत्—काचित् वृद्धा जलमानेतुं ग्रामतः बहिर्भवति। तामपेक्ष्य सा नदीतटस्य विशालवटमूले विश्रान्ता। वटः बहुदिनात् अत्र स्थितमान् इति अनुभूयते। वृद्धः संजातः। कति शाखाः शुष्काः। कति शुष्कप्रशाखा च तले तथा पतिताः। कति च भग्ना अपि वृक्षे संलग्नाः। तथापि वृक्षमिमं न कश्चित् छिनत्ति। इन्धनाय पर्णानि

अपि न नयति। केवलं नद्याः धीरस्रोतसि कति प्लवमानानि निम्नं प्रयान्ति। काकविष्ठासु शाखामूलं चित्रितम्।

अपरकूलेपि समकोटिकः पिप्पलपादपः। उभयोः सरलरैखिकस्थितिः। सोऽपि वट इव वृद्धः। वटावस्थानुकारी च। कौतूहलमजनि नीलाञ्जना-मानसे।

—वृद्धा निकटमुपगता आसीत्।

हस्तेङ्गितेन नीलाञ्जना तामाहूतवती। जलपानाय च अन्वनयत्। वृद्धा कलसीतः जलं निरगलयत्। मुखे अञ्जलिं संयुज्य आकण्ठं पीतवती नीलाञ्जना। ततः तामुपवेष्टुं व्यनयत्।

वृद्धा समासीना। नीलाञ्जना तामपृच्छत्—

"मातः! वृक्षद्वयं विशालकायम्। पुरातनमपि। तथापि इन्धनाय न कश्चित् काष्ठानि नयति? एषामपव्यवहारः किमर्थं क्रियते?

वृद्धा गम्भीरा आसीत्। मनाग् विहस्य ततः व्यबोधयत्—

"मातः! इयमेका नदी। अस्याः कूलद्वयम्। कूलद्वयस्य पार्श्वद्वयम्। पार्श्वद्वये ग्रामद्वयम्। ग्रामद्वयस्य वृक्षद्वयम्"

अभिप्रायं न ज्ञातवती नीलाञ्जना। पुनरपृच्छत्—

"किमनयोः महत्त्वम्....?"

"कथेयं पौराणिकी—"

ग्रामद्वयस्य संपर्कः अतिप्राचीनः। वर्षाकालं विहाय उभयत्र गमनागमनं सुकरम्। विपदि आपदि च ग्रामद्वयस्य जनाः परस्परं सहायाः।

एकदा अस्य ग्रामस्य एका किशोरी आसीत्। सा अस्माकं ग्रामस्य प्रतिलालिता कन्या। ग्रीष्मकाले नदीबालुकासु क्रीडार्थं अन्याभिः सह अत्र आगच्छति। संध्यासमये च गृहं प्रत्यावर्तते।

तेषां ग्रामस्य किशोरा अपि अत्र आयान्ति। ताभिः सह क्रीडन्ति। परदिन—खेलप्रकारं स्थिरीकृत्य प्रत्यागच्छन्ति।

—कालक्रमेण अस्माकं ग्रामस्य किशोरी युवती अभूत्। तथापि तस्या आगमनं अत्र अव्याहतमासीत्।

तेषां ग्रामस्य किशोरा अपि युवका अभवन्। तेषु केचित् संयताः। किन्तु एको युवकः नियतं आगच्छन् आसीत्। तेन सह अस्माकं ग्रामस्य कन्यायाः केलिः पूर्ववत् आसीत्। इत्थं उभयस्य आत्मीयता घनिष्ठा अभूत्।

प्रतिदिनमत्र तयोः सांध्यविहारः दीर्घीभूतः। अस्मिन् समये वर्षाकालः आगतः। उभयस्य मिलनं विघ्नितम्। तथापि दैनिकसंध्याकाले तौ अत्र आगच्छतः। अस्मिन् कूले इयम्, तस्मिन् कूले च सः। परस्परमवलोक्य गच्छतः।

एकदा तु वन्या प्रबला अभूत्। वृष्टिः च निरवच्छिन्ना आसीत्। तौ अत्र आगत्य कुत्र गतौ न कश्चित् जानाति—

कियद्दिनानन्तरं वसन्तः आगतः। उभयस्य प्रतीक्षास्थाने वृक्षद्वयं प्ररूढम्। ततः प्रभृति वृक्षद्वयं वर्धते। न कश्चित् अनयोः हानिं कुरुते। सर्वे चिन्तयन्ति वृक्षद्वयं प्रतीक्षारतम्। इयमस्माकं वटवधूः। सः च तेषां पिप्पलवरः। इयं तं प्रतीक्षते सः च इमां प्रतीक्षते इति विचिन्त्य प्रतिवर्षं वर्षाकाले एव अनयोः विवाहः यथारीति अनुष्ठीयते। अतः उभयं प्रति अस्माकं श्रद्धा विपुला"—वृद्धा उद्यापितवती।

कथामिमां श्रुत्वा नीलाञ्जनानासिकायां जलकणा प्रादुर्भूता—श्वेदो यथा नारङ्गचर्मणि। मनसि भातुं उपक्रान्ता खर्जूरच्छाया....

वृद्धा अपृच्छत्—"मातः! कुत्र गमिष्यसि ?"

नीलाञ्जना विनयस्मितेन अवदत्—"अहमद्य अस्मिन् ग्रामे निवस्तुमिच्छामि"—

"साधु चिन्तितम्। न कोऽपि अस्माकं आपत्तिः। बहवः त्वादृशाः आगच्छन्ति। अत्र दिनद्वयमेकं वा अतिवाह्य गच्छन्ति। आगच्छ मया सह। मम गृहे अद्य निवस। न कोऽपि गृहे मे वर्त्तते। पुत्रः सदा प्रवासी। अहमत्र सदा च एकाकिनी। गृहं परित्यज्य कुत्रापि गन्तुं मनो न वलते।

गृहेऽस्मिन् मम अतिलोभः। पुत्रः आह्वयति। वधूरपि बहुवारमागत्य गन्तुं बलात्करोति। तथापि यातुं मनः नाग्रसरं भवति। भवतु, सर्वं श्रावयामि। एहि....अधुना तु विलम्बो भवति। एहि...." वृद्धा पुरःसरति। नीलाञ्जना अनुसरति। वृद्धा तु निजकथां जल्पति।

नीलाञ्जना चिन्तयति वृद्धा....अपि....परिश्रमार्थमस्याः घृणा नास्ति। एकाकिनी अपि असामर्थ्यं नानुभववि। पुत्रः निकटे नास्ति। वधूरपि न वर्त्तते। तथापि निजसौख्यं परित्यज्य तयोः मङ्गलकामनासु कालं नयति। सैव पुरातनरीतिः परंपरा च सुरक्षिता अनया।

— वृद्धा द्वारे जलकलशं स्थापितवती।

"इदं मम गृहम्। अपरिष्कृतं पतति। बलो गतः। वयोऽपि गतम्। को वा निरतं यत्नं नेष्यति? यत्नवान् तु सदा प्रवासी। गृहिणी अपि तत्र"—वृद्धा अञ्चलात् कुञ्चिकामानीय द्वारमुन्मोचितवती।

"एहि, मातः....! चरणं ते धावयामि।"

अञ्जना गृहं प्रविष्टा। हृदयं तस्या आर्द्रमभूत्। नयने च अन्तर्जलमागतम्। वृद्धा यदा जलमानीय उपस्थिता तदा नीलाञ्जना वारितवती।

"नहि, त्वं तु मम मातृसदृशा। अधुनाऽपि मे माता। मम पादस्पर्शः न ते समुचितः, जननि....!"

वत्सलिता वृद्धा। सानन्दं तां निजवक्षसि संयुक्तवती। पृष्ठे च हस्तं संचाल्य अवदत्—"मातः....! देहे ते न किमपि वर्त्तते। अस्थिकतिमितं ते शरीरम्। किमर्थमित्थं भ्रमसि? अत्र कियद् दिनं निवस। देहः स्वस्थो भवतु। ततः गमिष्यसि। अत्र न कोऽपि त्वां किमपि वदिष्यति। अहं तव यत्नं नेष्यामि"।

नीलाञ्जना—नयनतः अश्रुणि निर्गत्य पल्वलितगण्डदेशे मिलितानि। कण्ठश्च शोकबद्ध आसीत्।

वृद्धा समस्तमातृस्नेहेन तामबोधयत्। यत् किंचित् उपाहारमानीय निजहस्तेन अभोजयत्। कन्यावात्सल्येन वृद्धा प्रीणिता आसीत्।

—उपस्थिता रजनी।

नीलाञ्जना नित्यसायंकर्मणि व्यापृता। वृद्धा भोजनमायोजयति। नीलाञ्जना तस्मिन् अन्धकारप्रकोष्ठे प्रार्थयति—

"शक्ति देहि....शक्ति देहि....शक्ति देहि....भगवन् !"

यदा वृद्धा रात्रिभोजनाय न्यवेदयत् नीलाञ्जना तां न्यषेधत्—

"नहि, जननि ! रात्रिभोजनं मम धर्मविरुद्धम्। नास्मिन् बलात्कुरु।"

धर्मभीत्या वृद्धा नाधिकमुक्तवती। परमसन्तुष्ट आसीत्। शनैः सविषादमवदत्—"एतर्थमेव तव देहहानिः भवति। शक्तिः कुत आगमिष्यति ?"

नीलाञ्जना ध्यानरता आसीत्।

वृद्धा सर्वाणि कर्माणि समाप्य आगता। अन्धकारेऽपि तन्निकटे उपविश्य बोधितवती "मातः! इयत् श्राम्यसि। इयत् च दुःखिनी भवसि। किं वा प्राप्स्यसि ? शृणु, किमहं वच्मि—नद्याः अरपार्श्वे कान्तारं वर्तते। कान्वारोत्तरं कति ग्रामा आगमिष्यन्ति। ततः तत्र एकः आश्रमः निर्मापितः। आश्रमे एकः महात्मा वर्तते। बहव जनाः तत्र गच्छन्ति। रोगी, योगी, भोगी इति सर्वे अनुदिनं तत्र धावन्ति। बहवः रोगात् मुक्ताः। पापात् च परित्राताः। बहवश्च लब्धफलाः। त्वमपि श्वः प्रभाते तत्र गच्छ। सन्यासी तत्र अतीव उदारः अतिप्रभाववान्। तस्य स्पर्शमात्रेण तव रोग अपैष्यसि। देह आरोग्यो भविष्यति। त्वमिनवा भविष्यसि"—वृद्धा अहसत्। सा रोगग्रस्ता इति वृद्धाया वचनं निशम्य नीलाञ्जना चकिता। तथापि द्रतिक्रियाहीनतया अपृच्छत्।

"किं तस्य नाम, जननि....! ?

"जना वदन्ति, सः शील परज्ञः"।

नामक्षुत्वा नीलाञ्जना अधीरा संजाता। तदानीमेव निर्गन्तुमुद्यता। परं वृद्धा शान्त्या शयितुं तामुपादिशत्। नीलाञ्जना वृद्धावचनं स्वीकृतवती।

सूर्यं उदितः ।

प्रातः समाप्तम् । उपाहारं भुक्तवती नीलाञ्जना । शरीरे शक्तिः संचरिता । वृद्धातः शुभकामनां गृहीत्वा सा निर्गता । धीरगत्या चलति । हृदये संवेगः क्रमशः स्थूली भवति । शीलप्रज्ञविषये तस्या अनेकचिन्ता । किन्तु तस्य नीतिः अद्यापि तस्यां रुचिं न जनयति । परं सा तस्य तद्दिन व्याकुलताम् अनुमनस्यति ।

सा नदीकूलं प्राप्ता ।

प्रतीक्षितं वटवृक्षं पिप्पलं च सम्यक् निरीक्षितवती । अनयोः विषये जनवाणी अतिमधुरा इति विभाष्य सा तरणीं प्रत्याशितवती ।

—तरणी कूलं प्रापिता ।

ग्रीष्मोऽयं समयः नदी न जलबहुला । तरीं विनाऽपि अपरपार्श्वं गन्तुं शक्यते । परं नवागतानां कृते तरीयं नूनं सहायिनी । नीलाञ्जना तरीयारूढा । नाविकः तस्याः रूपं पश्यति । पृच्छति सा कुत्र गमिष्यति इति । नीलाञ्जना मौना । दृश्यमानग्रामं गमिष्यति इति इङ्गितवती ।

तरी अपरकूलबालुकासु लग्ना । नीलाञ्जना तस्या सदिच्छां शुभकामनां च तस्मै व्याहरत् । नाविकः आत्मानं धन्यंमन्यमानः प्रत्यागतः ।

अग्रे धूसरकान्तारम् । कति कण्टकवृक्षान् विहाय न किमपि तत्र वर्तते । धूलिः उत्तप्तो भवति । श्रूयते कान्तारपक्षिणां आहतकाकलिः । नेत्रतः रश्मिजनितभ्रमवृत्ताः निर्गता भवन्ति । मध्ये मध्ये शीतोष्णपवनः कण्टकवृक्षान् दोलयति । ईषत् स्पृष्टध्वनिषु नीरवता घनीभवति ।

—मध्याह्नं निविडोभवति ।

नीलाञ्जना अनुकलयति तद्दिनवनदृश्यम्—श्वेताम्बराः उद्धताः । श्वेताम्बर्यः अपि देहलोलुपाः । धर्मस्य नियमं न कोऽपि पालयति, अनुसरति वा । धर्मः दूषितो भवति । धर्मयाजकानां नैतिकमधःपततं भवति ?.... येन प्रथमतः धर्मस्य भित्तिः निर्मिता सः न वर्तते अद्य । तस्य महद् उद्देश्यं न कोऽपि ज्ञातुं प्रभवति । निजमतानुसारं धार्मिका यथेच्चमव-

लम्बत्ते । धर्मस्य दूषितार्थं पुरस्कुर्वन्ति । सत्यं न कश्चित् अभिनन्दति । साधुं च न परिचिनुते ।

—कान्तारे शनैः शनैः, पादं निदधाति नीलाञ्जना ।

....अद्य श्वेताम्बरः शब्द केवलमावरणे प्रयुज्यः । अन्तःश्वेतता एषां नास्ति । हीनवृत्तिः परिसोषिका भवति । परस्परप्रवञ्चना एव जीविका जीवनं च । का वा अस्य प्रवाहस्य परिणतिः ? केवलं कलहः संघर्षः—अकालमरणम्—ध्वंसः....! अद्यत्वे आत्मनिरीक्षणस्य प्रवृत्तिः नास्ति । निजस्थितिविषये चिन्ता नात्ति । निजमहत्त्वस्य धारणा नास्ति । आत्ममर्यादार्थं स्पृहा नास्ति....। इतः परं धर्म इति न किमपि स्थास्यति । अधुना धर्मोऽयं क्षयिष्णुः । अल्पदिनाभ्यन्तरे अस्य सत्ताऽपि कुत्र गमिष्यति .... विषीदति नीलाञ्जना ।

उत्तापः प्रखरः । जिह्वा शुष्यति । देहः अपि तृषातुरः । जलं कुत्र ...? तथावि तस्याः चरणमविश्रान्तम् । बिभिन्न भावनासु सा निमग्ना—

अदूरे दृष्टः एकग्रामः । अयः परिचित इव । तत परं निजग्राम आयास्यति । नीलाञ्जना मनाक् प्रसन्ना । बहुदिनानन्तरं सा इतः आगच्छति । अत्र अनेकं परिषर्तनमवश्यं स्यात् । समवयस्काः कुत्र गृहिण्य संजायेरम् । पुत्रसुतादिभिः सहर्षं कालमश्नुवीरन् । बहुनववध्वश्च ग्रामं नूनभागताः स्युः ।

ततः बाल्यदृश्यावली अङ्किता मनसि—

तालवृक्षः रात्रौ पिशाचो भवति । स्वप्ने प्रातिवेशिनः बदरी पादपः नृत्यति । आम्रवृक्षः मध्वाह्नस्य निद्रां विरुजति । आम्रं आमलकी, तिन्त्रिणिः च मधुरायन्ते । ग्रामवीथिषु धूलिगृहाणि...., तदुपरि च 'कनियर' कुसुमानां शोभा कियन्न मनोहरा ? समये समये अपि गोखुसहत धूलिगृहाणां भग्नांशोऽपि संचीयते बालिकाभिः । धूलगृहेषु तासां कियन्न श्रमानुरागः ? बालकास्तु दुष्टाः । गृहं निर्मातुं न जानन्ति । केवलं विवादेन गृहाणि नष्टुं यतन्ते—क्षोणमहसत् नीलाञ्जना ।

पुरः एकः सौधः दृष्टः। ततः अर्धशेषमार्गः। ततः खर्जूर-पादपः। एषां यथावस्थितिं दृष्ट्वा तस्या मनसि एका आनन्दरेखा संचलिता। आसन्नतारुण्ये शीलप्रज्ञस्य स्पर्शः, तस्य आकुलता, तस्य प्रीतिकातरता.... मानसमागताः। किन्तु सर्वमेतत् आकल्य आनन्दितुं वयो नासीत्। सामर्थ्यं नासीत्। प्रवृत्तिरपि नासीत्। केवलं दर्शनमात्रमेका कामना—।

अतिशयं तृषातुरा नीलाञ्जना। जलमपि निकटे न दृश्यते। इतस्ततः अवालोकयत् सा। केवलं परितः जनानां पङ्क्तिः दृश्यते। युवकः, युवतिः, बालकः, बालिका, शिशुः वृद्धाः सर्वे सानन्दं पुनश्चलन्ति। सर्वेषामेकमेव लक्ष्यम्। स एव धवलसौधः। सर्वेषां वचने शीलप्रज्ञस्य प्रशंसा।

नीलाञ्जना क्लान्ता। कण्ठस्तस्याः शुष्कः। एकपदमपि उच्चारयितुं न शक्नोति—

—तथापि लोकपङ्क्तिषु मिलिता।

## २१

—नदी खेलति सागरकूले....

शीलप्रज्ञः हसति....हसति....हसति....। सः हासः सहस्थानां कृते—, संसारस्य सहस्थवृत्तये—, संसारस्य आदिलक्ष्योपरि—, संसारस्य रूपसत्तोपरि—, संसारस्य आदिग्रन्थिनिमित्तम्....

अद्य पूर्णिमा।

बहवो भक्ताः समवेताः। निदाघीयमपराह्णं मुखरम्। भक्तानां वेष्टनीमध्ये शीलप्रज्ञः निर्वेदः—निर्लिप्तः—, अतिमानसस्तरीयः। आत्मनिविष्टचेतनातले तस्य मानवसत्ता ऊर्ध्वगामिनी भवति।

भक्तः कश्चित् अपृच्छत्—"महात्मन्! भक्तैः परमाश्रमस्य का स्थितिः भविष्यति?"

शीलप्रज्ञः अन्वभवत्—सः वृद्धत्वमापन्नः। तस्य जरा जनमानसे प्रभावमातनोति। सः प्रकृतिस्थोऽभवत्। एका स्मितरेखा तस्य मुखे विद्योतिता। सः अबोधयत्—

'सृष्टेः स्रष्टुश्च तथा अविच्छेद्यसंपर्को नास्ति। यदि स्रष्टा न स्यात्, तर्हि अपि सृष्टिः जीवितुं शक्नोति। सृष्टिरियं पुनः स्रष्टा भविष्यति।" इति।

अनुसृत्य वदन् "नवरुचिसंपन्नश्च भूत्वा नवदिग्दर्शनं करिष्यति। इदं च सहस्थतायाः लक्षणम्। वयं तु मनुष्यस्य सामयिकगुरुत्वं प्रभुत्वं वा अनुभवामः। पृथिवी यथा, तथा वर्तते, वर्तिष्यते अपि।"

सहसा दूरदेशे कोलाहलः श्रुतः। किमभूदिति सर्वे तद्दिशमपश्यन्। कश्चिदागत्य विज्ञापितवान्—"एका श्वेताम्बरी दूरस्थसोपानात् स्खलिता।" अर्धवाक्यं निशम्य शीलप्रज्ञः तत्र अधावत्—

कृशकाया श्वेताम्बरी आलुण्ठिता। मुखे दीप्तिः नास्ति। शरीरे सामर्थ्यं नास्ति। केवलमस्थिमयं शरीरम्। तस्मिन्नपि वायुप्रवाहो मन्दः। धमनी च मृतप्राया।

तत्क्षणादेव जलमानेतुं भक्तान् निरदिशत् शीलप्रज्ञः। तामुत्थाप्य च निजभवनं च नीतवान्। निजशय्यायां शायितवान्। स्वहस्तेन जलं पायितम्। तस्याः पार्श्वे उपविश्य व्यजनेन क्लान्तिमपनेतुं यत्नवान् अभूत्। निमेषानन्तरं नीलाञ्जना नेत्रमुन्मोचितवती—

अर्धनिमीलितनयने तस्याः स एव उत्साही श्रेष्ठी, स एव अवमानित युवजोनः, स एव पीडित आचारग्राही, स एव प्रीतिकातरः महात्मा—

अर्धशेषमार्गस्य खर्जूरच्छायायां दण्डायमानः। स एव अतीवस्य मिश्ररागमुद्धृत्य वृद्धो भवति। मनाक् अहसत् नीलाञ्जना। स्मितं तस्या शुष्काधरे कृष्णिममासीत्। बहुचेष्टया शीलप्रज्ञस्य हस्तोपरि निजहस्तं निधाय मृदुकण्ठेन अवदत्—"शीलप्रज्ञ........? अद्य .. मम.... मानसिकी ...पूर्णा....

तस्याः मुखात् निजनामोच्चारणं श्रुत्वा द्रवितोऽभूत् शीलप्रज्ञः। व्यग्रभावेन उच्चैः समबोधयत् 'अञ्जने.......अञ्जने.......अञ्जने अञ्जने....!!!!"

निजवक्षःस्थले तामाधृत्य पुनः प्रीतिकातरकण्ठेन शीलप्रज्ञः आह्वयत्— 'अ....ञ्ज ... ने....!'

पुनरेकवारं नयनमुन्मोचितवती नीलाञ्जना। शीलप्रज्ञस्य नयने अश्रु उत्कूलमासीत्। नीलाञ्जनायाः मुखं तु प्रसन्नमासीत्। मनाग् विहस्य नेत्रं मुद्रितवती सा। स्मितं तथापि संलग्नमासीन् अधरे....

निजमध्ये प्रलयमाविष्कुर्वन् आसीत् शीलप्रज्ञः। उत्साहो विगतः। उत्कण्ठा विलुप्ता। स्मृतिरपगता। स्वप्नः समाप्तः। अन्ततः स निजपाटलाम्बरमानीय तदुपरि प्रसारितवान्।

गम्भीरभावेन भक्तान् आह्वयत्—

भक्ता आगत्य अपश्यन्—शीलप्रज्ञः गम्भीरः—निर्वेदः—निर्लिप्तः। चक्षुः तस्य आरक्तम्। तथापि मुखे स एव मिश्रानुरागस्य गहनहसः। सहस्थतायाः प्रणवीयदीप्तिः।

"आदिशतु महात्मा"—

"भक्ताः! श्वेताम्बरी सहस्था अभूत्। तस्या मरणशरीरमपि सहस्थीकरणीयम्। पश्यत, चन्द्र उदितः। अर्धशेषमार्गे खर्जूरच्छाया स्पष्टा दृश्यते। तत्र अस्याः चिता आयोजनीया।"

आदेशमात्रेण भक्ताः यथायुक्तमनुष्ठातुं प्रवृत्ताः—

शीलप्रज्ञः तस्याः मृतशरीमुपस्थाय मृदुतया अवदत्—"अञ्जने ...! इतः प्रभृति न त्वं श्वेताम्बरी। सहस्थश्रेष्ठिनः सहस्था पाटलाम्बरी। इयमेव सहस्था अस्माकं जन्मजन्मान्तरस्य शेषमूर्च्छना"

"चिता आयोचिता" भक्ताः व्यज्ञापयन्। उदासः शीलप्रज्ञः तां स्कन्धे निधाय चितायामुत्सृष्टवान्। गम्भीरभावेन च प्रत्यागतः वासभवनम्।

भक्ताः आश्चर्यान्विताः।

"सत्यम्। अयं महात्मा। न केवलं जनान् उपकरोति। अपि तु मृतस्य शेषकृत्यमपि करोति। धन्यो....धन्यो....महात्मा....। युगे युगे पुरुषोऽयमवतरतु उपकाराय"—

अर्धोत्तरा यामिनी।

निद्राभिभूत् आश्रमः। शीलप्रज्ञः शनैः बहिरागतः। अपश्यत् चितायां अग्निमात्रमवशिष्यते। तमालक्ष्य सः चितासमीपमागतवान्।

अर्धशेषमार्गतः छाया अपसृता आसीत्। चितातः केवलं सूक्ष्मधूमधारः उत्तिष्ठते। आश्रमः पूर्ववत् उज्ज्वलः। आश्रमस्य परिसरोऽपि शान्तिस्नातः। रजनी तथापि गहना लक्ष्यते।

....'इयती प्रेरणा....इयान् उत्साहः....इयती च मादकता....इयान् च श्रमानुरागः–इयती च कर्मप्रवणता...एतत् सर्वं एकनिर्झरिणीवः निर्गतम्। एकदिवसगमनानन्तरपरदिनं वाहयितुं आशा, इच्छा, प्रवृत्तिश्च अस्या एव निर्झरिण्याः सूचना आसीत्। सर्वमुपरतमद्य"—इति चिन्ताशीलः शीलप्रज्ञः अलक्ष्यतया पुरो गच्छति।

—चिता निर्वाणप्राया आसीत्।

पुरतो वनानी ज्योत्स्नामयी। शीलप्रज्ञः तल्लक्षीकृत्य गच्छति। चरणपतनस्य निश्चितता नास्ति। मनसि भावना नास्ति। पश्चात् दृष्टिः नास्ति। पुरश्चिन्ता नास्ति। अधरे केवलमेको हासः– हासः श्रेष्ठिजीवनस्य कृते....अर्धशेषमार्गस्थ कृते....खजूरच्छायायाः स्खलनकृते....कर्ममयसमयस्य अवसाननिमित्तम्...मरणोत्तरस्य आहुतिनिमित्तम्....

•

भक्ताः इतस्ततः अन्विष्य श्रान्ता अभूवन्। शीलप्रज्ञस्य न कोऽपि संवादः लब्धः। यावत् दूरपर्यन्तं तस्य ख्यातिः परिव्याप्ता आसीत् तावद्दूरं वार्ता प्रेषिता। किन्तु न किमपि फलमभूत्।

अन्ततः सांप्रतिमः वार्तां लब्धवान्। स्वयमागत्य आश्रमे उपस्थितः। भक्ताः तं आमूलवृत्तान्तमश्रावयन्। सांप्रतिमः आश्रमं परिकल्य अपश्यत्–आश्रमः अतिसुन्दरः। शीलप्रज्ञस्य वासभवनं चिराय उन्मुक्तम्। तत्र विराजते एका सहस्था मूर्तिः।

भक्ता अवर्णयन्—"....अन्ततः एका श्वेताम्बरी आगता। सा च अतिपीड़िता आसीत्। शीलप्रज्ञस्य अङ्के सा सहस्था अभूत्। तस्याः चितामपि स्वयं स रचितवान्। शेषकृत्यमपि संपादितवान्। किन्तु एतन्महदाश्चर्यमासीत्—यदा श्वेताम्बरी सहस्था अभूत्, तदा तस्याः न कापि प्रतिक्रिया आसीत्। मृताधरेऽपि स्मितं संलग्नमासीत्। सांप्रतिमः सर्वमवगतवान्।

उभयस्य अकालवियोगः तस्यकृते महान् दुःखप्रद आसीत्। दुःखेन सः मर्माहतोऽभवत्। देहे कम्पः समजायत। अपूर्वभीतिश्च मनसि समजनि। सः तत्रैव अन्वभवत्—तस्य प्रतिपत्तिः ह्रसते। धर्मस्य अधःपतनं संघटते। तस्य वचनमपि न कश्चित् आद्रियते न वा श्वेताम्बरे कस्य श्रद्धा वर्त्तते।

मर्मतुदा घटना तं व्यचालयत्। सः शीलप्रज्ञस्य आश्रमतः परावृत्तः। किंतु पश्यन् आसीत्—न शीलप्रज्ञो वर्तते। वर्त्तते न वा नीलाञ्जना। तथापि जनपङ्क्तिः निरच्छिन्ना। सदा तत्र कोलाहलः कर्ममुखरता। परस्परप्रमोदोत्सवेषु आश्रमः पुण्यस्थानं भवति। अस्य महिमा च सर्वत्र

प्रथ्यते । शीलप्रज्ञः महात्मा संजातः । नीलाञ्जनायाः प्राक् वृत्तान्तः आविष्क्रियते जनैः । साऽपि पुण्यमयी भवति । संयमश्रृङ्खला-अनुप्रेरणादि-सहस्थनीतिषु सा शाश्वती भवति । तस्याः चिताभस्म महनीयं भवति । आश्रमः यशस्वी भवति ।

ततः प्रभृति सांप्रतिमः इतस्ततः भ्रमणे कालं यापितवान् । जैनधर्मं प्रति तस्य सर्वविधा आसक्तिः विलुप्ता । तथापि यशोमोहः पूर्ववत् आसीत् । किंचित्परिवर्तनार्थं नूतनरुचिमन्विष्यन् आसीत् सः ।

परिशेषतः सः धर्मान्तरे दीक्षितोऽभूत् श्वेताम्बरं परित्यज्य गैरिकवसनमग्रहीत् । वौद्धरूपेण संघस्य कार्यभारमुदवहत् । आचार्यः सांप्रतिमः महज्ञधम्मपुत्तः संजातः ।

संघे अद्य समयः त्वरते ।

# २३

....अनुशीलनं समाप्तम् ।

नयनमुपमर्द्य धर्मपुत्त: सुदीर्घश्वासं परित्यक्तवान् । शोकविजड़ितमासीत् तस्य हृदयम् । नीलाञ्जनाकृते अनुतप्तवचनं तस्य बलात् बहिरागमत्—

"अञ्जने ...!

....आत्मनिरीक्षणद्वारा क्रमशः मानवस्य उत्तरणं सम्भवति इति ते वचनमद्य सम्यक् समीक्षितं मया । तव कस्यापि प्रश्नस्य उत्तरं न दत्तम् । अहं स्वीकरोमि । उत्तरणाय प्रवृत्तिः जीवार्थं अपराप्रस्तुतिः प्रवृत्तिः—एको महान् सागरः, यस्य तरङ्गाः यत्किंचित् अननुमतं तत् सर्वं बहिः निक्षिपन्ति....।

देहस्य चर्म एव जानाति उष्णं निरुष्णं वा जलम् । मनः जानाति अप्राप्तेः व्यथाम् । कुसुमेषु कलिषु च अद्यापि त्वामन्वेषयामि । इयं मम च आश्वस्तिः भवति ।

अञ्जने....! अवश्यं त्वया निर्वाणमधिगतं स्यात् । किन्तु मन्निकटे निर्वाणं मरणमिव नैका नयनाकर्षिणी घटना । इयमेका मरणोत्तरा आत्मिकी अवस्था । अस्याः कृते त्वं जीविता मृताऽपि । 'अहं-स्व'-शब्दायनात् त्वं निर्मुक्ता ।

किन्तु...., आत्मीयताविषं अद्यापि देहे मे ज्वलति । आत्मीयतायाः निभृतस्पन्दनं प्रतिमुहूर्तं मां व्यथयति । अहमद्यत्वे अनुभवामि स्वादिष्ठ-प्रहरस्य आत्मीयानुभूतिः अतिमधुरा....

अञ्जने....! जीवने सुखमायाति । दुःखमायाति । व्याधिरागच्छति । जरा आयाति । मरणमपि आयाति । किंतु नायाति समयः । कालो गच्छत्येव । त्वमद्य कालस्य पथि अपसृता । तदेव आसन्नसमाप्तमुहूर्तं

मन्नयते भासते। तस्मिन्नेव मुहूर्त्ते जीवननिकटे तव अनुनयो नासीत्। न वा मरणनिकटे आकुलता। न वा यन्त्रणविद्धनिमित्तं प्रायश्चित्तस्य इच्छा ते आसीत्। न वा परिस्थितेः समवेदनायाः प्रतीक्षा आसीत्।

एकस्य अभावं नान्यः पूरयितुं शक्नोति। केवलमात्मीयतायाः सरलरेखातः कति बिन्दवः विगलन्ति। तदेव शून्यस्थानं तथा रिक्तं वर्तते; वत्समीपतः पुनरेकबिन्दुः स्खलति। तदन्तरं शेषबिन्दुः निपतति। इयमेव संसारधारा—

अञ्जने....! त्वमेव इह आत्मीयतायाः प्रतीका...., प्रशान्तेः..अरुन्धती, मम उन्नमितपादस्थापनाय त्वया भूमिः निर्दिष्टा। तदेव अद्य मत्कृते पर्याप्तम्...''

—संचरति उपवने धम्मपुत्तः। वीथिप्रान्ते दण्डायमानस्य दृष्टिः संलग्ना वर्त्तते पिप्पलपादपस्य अग्रभागे। मनसि असंलग्नप्रतिध्वनिः। श्रवणे म्लानप्रभातस्य विलपितस्वरः। चतुपार्श्वे मग्नस्वप्नानां विकीर्णाशा....

तथापि हृदये उत्कण्ठा नास्ति। स्वरे उत्तेजना नास्ति। मनसि अस्थिरता नास्ति। सः केवलं दृढतासु च कोमलतासु च निष्ठुरसत्यं अनुगृह्णन् वर्त्तते। चन्द्रिकायाः गतितालेषु अशान्तचक्रवाकः मध्ये मध्ये चीत्करोति। चरणद्वयं तस्य वेगशून्यसैनिकस्य चरणमिव स्थिरायते।

— समाप्तम् —